# 39.59 Lakh



National Readership Studies Council's latest survey- Out of 301 magazines in India Telugu occupies the third position And that position is for SWATI WEEKLY.

SWATI SAPARIVARA PATRIKA has endeared herself to the hearts of 39.59 lakh readers and in every village and town of Andhra Pradesh.

It is Scintillating Victory. Unparalleled Glory. Inevitable Crowning.

Telugus are in every country in the world. Telugus are in every state of India. Swati is the identity of Telugus. Swati is the darling of every Telugu.

It's an honour bestowed for 20 years of hardwork Infectious enthusiasm and dedicated efforts.

For making this great victory possible
We Salute Telugu Language
We Salute Telugus
We Salute all Telugu Readers.

THE LARGEST CIRCULATED TELUGU WEEKLY





**Swati**





# चन्दमामा
(नवेम्बर् - २००५ सञ्चिका)

# बालानां विशेषाङ्कः

भवत्सु किशोरेषु लेखकेषु चित्रकारेषु (६-१५ वर्षीयेषु) च निवेदनं यत् आत्मना रचिताः कथाः चित्राणि वा प्रेषयन्तु इति ।

## कथा

● अधिकाधिकतया तिस्रः कथाः प्रेषयितुं शक्याः । ● याभिः भाषाभिः चन्दमामा प्रकाश्यते तासु कयाचित् भाषया कथाः प्रेषयितुं शक्याः । ● कथाः ५०० शब्दात्मिकाः, ततोऽपि न्यूनशब्दात्मिकाः वा स्युः । ● शीर्षकम् आकर्षकं स्यात् । ● चिताः कथाः सर्वाभाषाभिः प्रकाशयिष्यन्ते ।

## चित्राणि

● अधिकाधिकतया त्रीणि चित्राणि प्रेषयितुं शक्यानि । ● चित्रस्य आकारः १५ X १० पादमितः स्यात् । ● चित्रं भारतीय-परम्परानुगुणं स्यात् । चित्रेण सह तत्सम्बद्धानि विवरणवाक्यानि अपि स्युः । ● यत् चित्रं चीयते तस्य रचयिता चेन्नैनगरं प्रति आगत्य चित्रलेखनाय सिद्धः स्यात् । ● प्रयाण-व्ययः आयोजकैः दास्यते ।



## सामान्यसूचनाः

● पास्पोर्ट्-आकारकं भावचित्रं (वर्णमयं) प्रेषणीयम् । ● पृथक् पत्रे नाम, वयः (जन्मदिनाङ्कः), कक्ष्या, विद्यालयनाम, गृहसङ्केतः Pin code सहितः, दूरवाणीसङ्ख्या इत्यादिकं लिखित्वा प्रेषणीयम् । ● भागग्रहीतुः कथायां चित्रे वा पालकस्य हस्ताक्षरम् आवश्यकम् । ● प्रेषणसमये पिहितपत्रस्य उपरि Children's Special इति लेखनीयम् ।




अन्तिमः दिनाङ्कः-१५, सप्टम्बर् २००५

चन्दमामा इण्डिया लिमिटेड्
८२, डिफेन्स् आफीसर्स् कालोनी, एक्काटुथङ्गल्,
चेन्नै - ६०००९७



चन्दमामा सम्पुटः - २१ सप्टम्बर् - २००५ सञ्चिका - ९




# अन्तरङ्गम्



## एतस्य अङ्कस्य विशेषाः


















**ग्राहकशुल्कम् -**

अमेरिका-केनडादेशयोः कृते

प्रतिकृतिमूल्यम् - $२

वार्षिकं शुल्कं - $२०

भवदीयं धनं 'Chandamama India Limited' नाम्ना प्रेष्यताम् -



**Subscription Division**

**CHANDAMAMA INDIA LIMITED**

No. 82, Defence Officers Colony, Ekkatuthangal, CHENNAI - 600 097

E.mail : subscription@chandamama.org



**ग्राहकशुल्कविवरणम्**

वायुयानेन भारतेतरदेशान् प्रति

वार्षिकं (१२ सञ्चिकाः) - रू.९००/-

भारते रू. १४४/- (बुक्पोस्ट् द्वारा)

भवदीयं धनं D.D.द्वारा धनादेश(M.O.)द्वारा वा 'Chandamama India Limited' नाम्ना प्रेषणीयम् ।



विज्ञापिकादानार्थं सम्पर्क्यताम् -

चेन्नै - *शिवाजी*, Ph - 044-22313637/22347399

Fax: 044-22312447, Mobile: 98412-77347

email : advertisements @ chandamama.org

देहली - OBEROI MEDIA SERVICES, Telefax (011) 22424184

Mobile: 98100-72961, email: a.s.oberoi@indiatimes.com



*संस्थापकौ –*
चक्रपाणिः, बि. नागिरेड्डिः च

# उत्कृष्टा शिक्षकच्छात्रसम्बन्धपरम्परा

अस्माकं परम्परा वदति – माता इव पिता इव गुरुः अपि दैवतम् इति । डा॰ सर्वेपल्लि राधकृष्णन्वर्यः अत्युत्तमः शिक्षकः आसीत् । प्रपञ्चस्य अनेके विश्वविद्यालयाः तं भाषणाय निमन्त्रयन्ति स्म । भारतस्य राष्ट्रपतिपदवीम् अलङ्कृतवान् प्रथमः शिक्षण-तज्ज्ञः सः एव । तस्य दिवङ्गतेः अनन्तरं निर्णीतं यत् तस्मै गौरवार्पणाय तदीयं जन्मदिनं शिक्षकदिनत्वेन आचरणीयम् इति । तदीयं जन्मदिनं भवति – सप्टम्बर्मासस्य ५ दिनाङ्के ।

उत्तमः शिक्षकः कः ? यः समर्थतया ज्ञानं सङ्क्रामयति सः एव समर्थः शिक्षकः इति उच्यते । ज्ञानमात्रस्य सङ्क्रमणेनापि न अलम्, अपि तु मानवीयानि मौल्यानि, अमूल्यानि तत्त्वानि चापि तेन सङ्क्रामणीयानि । एतादृशं शिक्षणं पूर्वं गुरुकुलेषु प्राप्यते स्म । गुरुः जीवनदर्शनं कारयति स्म ।

अध्यापकस्य तत्त्वस्य च सम्बन्धः उत्कृष्टः भवेत् । राधाकृष्णवर्यः एतद्विषये वदति – ''अध्यापकाः सदाचारसम्पन्नाः स्युः । आचारे श्रद्धा, तत्त्वे निष्ठा, छात्रेषु वात्सल्यं च स्यात् तेषु'' इति । यदा एतादृशाः गुणाः शिक्षकेषु भवन्ति तदा एव छात्राः तेषु आदरवन्तः भवन्ति ।

उत्तमा परम्परा निर्मातव्या चेत् शताधिकानि वर्षाणि आवश्यकानि भवन्ति । किन्तु सौभाग्यवशात् भारते पूर्वजैः वर्धिताः उत्तमाः परम्पराः अद्यापि सन्ति एव अक्षुण्णतया । उत्कृष्टा शिक्षकच्छात्रसम्बन्धपरम्परा सा या अस्ति, सा अद्यापि अस्ति अनुकरणार्हा एव ।

*सम्पादकः* – विश्वम्





## वाचकानां कृते कथास्पर्धा - परिणामः (फेब्रवरी - ०५)

# उत्तमः मार्गः



धनरामस्य वचनं श्रुत्वा जगद्रामः अवदत् - "मम पुत्रेषु अन्यतमः दत्तकरूपेण दीयते चेत् मया पुनः कदापि तस्य प्रीतिः प्राप्तुं न शक्यते । धनात् अपि प्रीतिः एव श्रेष्ठा इति चिन्तयामि अहम् । अतः अहं कमपि पुत्रं दत्तकरूपेण भवते दातुं न इच्छामि" इति ।

"यः मम दत्तकपुत्रः भविष्यति सः उच्चशिक्षणं प्राप्स्यति । तस्य जीवनम् अपि सुखमयं भविष्यति । एतस्य एव फलरूपेण तदीयाः अन्ये सोदराः अपि योग्यशिक्षणादिकं प्राप्तुं शक्नुयुः । अतः एतं प्रस्तावं न निराकरोतु कृपया" इति अवदत् धनरामः ।

एतत् सम्भाषणं दूरात् एव श्रुतवान् जगद्रामस्य पुत्रेषु अन्यतमः अवदत् - "भवतः सम्पत्तिम् अस्मासु कश्चित् एकः प्राप्नोति चेत् न कोऽपि विशेषलाभः । सम्पत्तेः उत्तमः उपयोगः नाम असहायानां कृते तस्याः वितरणम् । अस्मद्ग्रामे दरिद्राः बहवः सन्ति । तेषां विकासविषये चिन्तयतु भवान् । तेन सम्पत्तेः सद्विनियोगः भविष्यति । सद्गतिप्राप्त्यर्थं तु अग्रे कश्चित् दत्तकरूपेण स्वीकरोतु । सम्पत्तिः तु सर्वेभ्यः वितीर्यते चेदेव वरम्" इति ।

"भवता उक्तं युक्तम् एव । सद्गतिप्राप्तिमात्रार्थं दत्तकस्वीकारः चिन्तनीयः । सम्पत्तेः तु वितरणम् एव चिन्तनीयम् । तदा एव ममापि गौरवम् । एवमेव करिष्यामि अहम्" इति उक्तवान् धनरामः ।

**गोपालकृष्ण,** कुन्ननाट्टुपरम्बिल्
(पो॰) कणयम्, (जि॰) पालक्काड् - ६७९१२५ केरलम्



# उत्तमः वैद्यः

वल्लभपुरस्य निवासी रमेशः प्रसिद्धः वैद्यः । जनाः अपि एतम् अद्वितीयं मन्यन्ते स्म वैद्यशास्त्रे । सः वैद्यः सन्तानहीनः । सः स्वकीयां विद्याम् अन्यं बोधयितुम् इच्छति । किन्तु तस्य विश्वासः आसीत् यत् अध्ययने नितरां श्रद्धा, आसक्तिः च यस्मिन् भवति स एव बोधनाय अर्हः इति ।

कदाचित् रमेशस्य बन्धुः कश्चित् कमल-नामकः पुत्राभ्यां सह वैद्यं द्रष्टुम् आगतः । सः नगरे रत्नवणिक् आसीत् । आ केभ्यश्चित् दिनेभ्यः कश्चन रोगः तं बाधते स्म । अत एव चिकित्सार्थं सः अत्र आगतः । तस्य पुत्रौ धनञ्जयराघवौ वैद्यवृत्तौ आसक्तिं प्रदर्शित-वन्तौ ।

रमेशः स्वचिकित्सया सप्ताहाभ्यन्तरे एव कमलस्य रोगस्य तीव्रतां न्यूनीकृतवान् । अनेन सन्तुष्टः कमलः प्रस्थानात् पूर्वं रमेशं प्रशंसन् – ''भवान् साक्षात् धन्वन्तरिः एव । किन्तु भवता सहैव भवति विद्यमानं प्रावीण्यम् अपि विनष्टं न भवेत्'' इति उक्तवान् ।

तदा रमेशः – ''मया किं कर्तुं शक्येत ? यस्मिन् वैद्यशास्त्रे श्रद्धा अस्ति तादृशम् एव अहं बोधयितुम् इच्छामि'' इति उक्तवान् ।

तदा कमलः – ''मम पुत्रयोः उभयोरपि अस्मिन् शास्त्रे अभिरुचिः अस्ति । एतौ उभौ अपि भवान् शिष्यत्वेन स्वीकरोतु'' इति सविनयम् अवदत् ।

रमेशः – ''अहम् एतौ परीक्ष्य स्वनिर्णयं श्रावयामि'' इति उक्तवान् । तेन सन्तुष्टः कमलः नगरं गतः ।

तयोः मध्ये धनञ्जयः बुद्धिमान्, विषयं झटिति अवगन्तुं समर्थः च । राघवः तु शान्तमनस्कः । सर्वं विषयं सः द्विवारं श्रुत्वा एव अङ्गीकरोति । रमेशः दश दिनानि यावत् तौ उभौ अपि सस्यानां मूलिकानां वनौषधस्य च वैशिष्ट्यं बोधितवान् । चिकित्साक्रममपि



अवगन्तुं सूचितवान् ।

एकदा रमेशेन वार्ता प्राप्ता यत् पार्श्वग्रामस्य भूस्वामी नितराम् अस्वस्थः इति । भूस्वामिना सेवमानः आहारः जीर्णः न भवति । अनेन सः बहु शक्तिहीनः जातः आसीत् । एतां वार्तां यः आनीतवान् तमेव रमेशः भूस्वामिनः विषये इतोऽपि कांश्चन प्रश्नान् पृष्टवान् । तेन रमेशेन ज्ञातं यत् भूस्वामी अजीर्णरोगपीडितः इति । सः भूस्वामिनः चिकित्सां कर्तुं धनञ्जयं सूचितवान् । धनञ्जयस्य प्रस्थानात् पूर्वम् अजीर्णरोगनिमित्तं कीदृशस्य औषधस्य उपयोगः करणीयः इत्येतम् अंशम् अपि उक्त्वा प्रेषितवान् ।

दिनद्वयं यावत् गुरोः वचनानुसारमेव औषधं निर्माय भूस्वामिनं चिकित्सितवान् धनञ्जयः । तेन दत्तस्य औषधस्य स्वीकारात् भूस्वामी अपि किञ्चिदिव स्वस्थः जातः । किन्तु अल्पे समये एव पुनरपि सः पूर्वतनेन एव रोगेण पीडितः अभवत् । अस्य कारणम् अजानन् धनञ्जयः किं करणीयम् इति अज्ञात्वा प्रत्यागतः ।

राघवः भूस्वामिनः चिकित्सार्थं गुरोः अनुमतिं प्रार्थितवान् । रमेशेन अनुमतिः दत्ता । तत्र गतः राघवः प्रथमं भूस्वामिना स्वीक्रियमाणम् आहारं परीक्षितवान् । तस्य आहारे घृतस्य तैलस्य च उपयोगः अधिकः आसीत् । तस्य परिशीलनात् दोषः कुत्र अस्ति इति राघवः ज्ञातवान् एव ।

सः भूस्वामिनम् उक्तवान् – ''महोदय ! आहारविषये पथ्यम् आवश्यकम् । दश दिनानि यावत् भवान् तिन्त्रिणीरसेन, मथितेन तक्रेण वा सह भोजनं करोतु । तदा एव गुरुणा दत्तम् औषधं फलकारि स्यात्'' इति ।

भूस्वामी तस्य वचनम् अङ्गीकृत्य तथैव आचरितवान् । सप्ताहाभ्यन्तरे एव तस्य रोगः उपशान्तः । भूस्वामी राघवाय उपायनानि दत्त्वा प्रेषितवान् ।

राघवः यदा प्रत्यागतः तदा रमेशः गृहे न आसीत् । धनञ्जयः राघवात् सर्वं विषयं ज्ञातवान् । सायं यदा रमेशः गृहं प्रत्यागतः तदा धनञ्जयः – ''गुरुवर्य ! राघवेण दत्ता चिकित्सा मया ज्ञाता । जीरिका, मरीचः, गुडः इत्येतैः निर्मितं कषायं सः दत्तवान् । अहमपि भवतः वचनानुगुणमेव तमेव कषायं तस्मै रोगिणे दत्तवान् आसम् । किन्तु अहं सफलः न जातः । किमर्थम् एवं जातम् ?'' इति आश्चर्येण पृष्टवान् ।

तदा रमेशः हसन् उक्तवान् – ''रोगी यथा वैद्येन परीक्ष्यते तथा रोगोऽपि परीक्षणीयः । तेन रोगस्य मूलं कारणं ज्ञातव्यम् । सः भूस्वामी अधिकम् आहारं सेवते । एतादृशे प्रसङ्गे औषधात् अपि पथ्यमेव अधिकलाभकारि । एतत् ज्ञातवान् राघवः तत्र सफलः सञ्जातः'' इति ।

परेद्यवि तौ उभौ अपि वनं प्रति गतौ मूलिकासङ्ग्रहणाय । तदा कस्यचन वृक्षस्य अधः कश्चित् मूर्च्छितः सन् पतितः ताभ्यां दृष्टः । तस्य वेषभूषादिकम् एव सूचयति स्म यत् एषः नितरां दरिद्रः इति । अतः धनञ्जयः – ''एषः कोऽपि भिक्षुकः स्यात् । बुभुक्षया मूर्च्छितः इति मन्ये । गच्छाव तावत् । आवां यदर्थम् आगतौ तत् कार्यं समापयाव'' इति राघवम् उक्तवान् ।

''यदर्थम् आवाम् आगतौ तत् कार्यं तु कुर्वः एव । किन्तु एतम् एतादृश्यां स्थितौ परित्यज्य गमनं न उचितम्'' इति वदन् राघवः पतितस्य मुखे जलसेचनं कृतवान् । तदा सः सचेतनः जातः ।

ततः राघवः – ''धनञ्जय ! एतं गृहं नीत्वा भोजयाव । तदा एतदपि ज्ञायते यत् बुभुक्षाकारणात् एव एषः मूर्च्छितः उत अन्यरोगकारणात् इति । गुरुणा एषः परीक्षणीयः'' इति वदन् तं गुरुसमीपम् आनीतवान् ।

रमेशः सर्वं वृत्तान्तं ज्ञात्वा धनञ्जयं बोधितवान् – ''असहायानां, रोगिणां च विषये वैद्येन दया प्रदर्शनीया । रोगिणाम् आर्थिकपरिस्थितिं ज्ञात्वा तेभ्यः धनं स्वीकरणीयम् । रोगिणः अस्माकं मित्राणि इति सम्भाव्य एव वैद्याः चिकित्सां कुर्युः । तदा एव वैद्येन उन्नतं स्थानं प्राप्तुं शक्यते'' इति ।

गुरोः वचनं श्रुतवतः धनञ्जयस्य मुखं विवर्णं जातम् । तेन उक्तं – ''क्षन्तव्यः अहम् । वैद्यत्वं प्राप्य अधिकं धनं सम्पादनीयम् इति मम इच्छा आसीत् । किन्तु इदानीं मया ज्ञातं यत् वाणिज्यमेव अधिकस्य धनस्य सम्पादनाय योग्या वृत्तिः इति । वैद्यवृत्तिः मह्यं न रोचते । अहं गृहं गन्तुम् इच्छामि'' इति । ततः सः स्वगृहं प्रतिगतः ।

राघवः रमेशस्य शिष्यः भूत्वा वैद्यशास्त्रं सम्यक् अधीत्य गुरोः अपि उत्तमः वैद्यः इति यशः प्राप्तवान् ।






# लोभः

कुमुद्वतीराज्ये स्थितायाः कुमुदिनीनद्याः तटे स्थिते आश्रमे सोमशेखरनामकः कश्चन मुनिः आसीत् । गुरुकुलं चालयन् सः शिष्यान् ध्यानं पाठयन् चित्रकलामपि बोधयति स्म । सः मुनिः चित्रकलायां सिद्धहस्तः । अतः चित्रकलायाम् आसक्ताः केचन महाधनिकाः सुदूरात् अपि आगत्य तेन उच्यमानं मूल्यमपि दत्त्वा स्वचित्राणि लेखयन्ति स्म ।

मुनिः यस्य चित्रं लिखति तस्मात् धनम् अधिकमेव स्वीकरोति स्म । अस्मिन् विषये जनानां मनस्सु असहना जायते स्म । केचन स्वासहनां प्रकटयितुं सङ्कोचं नानुभवन्ति स्म । यतः मुनिना सता तावतः धनस्य स्वीकरणं न उचितमिति तेषाम् आशयः ।

जनानाम् आरोपादिकम् अगणयन् सः मुनिः तु स्वस्य निर्णयविषये बद्धादरः एव आसीत् ।

एकदा अलङ्कृतात् रथात् राजनर्तकी मुनेः आश्रमस्य पुरतः अवतीर्णा । सा मुनिम् उक्तवती – ''भवता मम चित्रं लेखनीयम्'' इति ।

''अस्तु नाम । क्षणाभ्यन्तरे भवत्याः चित्रं सिद्धं करिष्यामि । किन्तु एतदर्थं भवत्या अधिकं धनं दातव्यं भवति'' इति मुनिना उक्तम् ।

तदा राजनर्तकी – ''चिन्ता मास्तु । भवान् यावद् धनम् इच्छति तावत् अहं दास्यामि । वदतु, कियत् धनं दातव्यं मया'' इति पृष्टवती मुनिम् ।

''भवत्याः सामर्थ्यं कियत् ? कियत् दातुं शक्नोति भवती ?'' इति पृष्टवान् मुनिः ।

तया पृष्टम् – ''शतं रूप्यकाणि पर्याप्तानि किम् ?'' इति ।

एवं कथनसमये नर्तक्याः मनसि – 'मम वचनेन मुनिः सन्तुष्टः भविष्यति' इति विचारः आसीत् ।

किन्तु मुनिः कमपि भावम् अप्रदर्श्य विना

सङ्कोचम् उक्तवान् - ''द्विशतं रूप्यकाणि दीयन्ताम्'' इति ।

मुनेः वचनेन नर्तकी दिग्भ्रान्ता । किन्तु स्वमनस्स्थितिम् अदर्शयन्ती सा - ''भवता पृष्टं धनम् अधिकम् । एतादृशः लोभः मुनेः न शोभते'' इति उक्तवती ।

''अस्मिन् विषये वार्तालापः व्यर्थः एव । मया उक्तं धनं पूर्वमेव दातव्यम् । तदनन्तरम् एव मया चित्रलेखनम् आरप्स्यते । यदि मम नियमः भवत्यै न रोचते तर्हि भवती गन्तुम् अर्हति'' इति स्पष्टस्वरेण मुनिना उक्तम् ।

मुनेः वचनानि राजनर्तक्याः अहम्भावम् अजागरयत् । यत् कार्यम् उद्दिश्य आगतं तस्य कार्यस्य समापनं विनैव गमनं न उचितम् इति मत्वा सा द्विशतं रूप्यकाणि तस्मै ददती उक्तवती - ''धनं स्वीकरोतु । अहम् उद्याने तिष्ठामि । मम चित्रं विलिखतु'' इति ।

ततः प्रस्थिता सा कस्यचित् वृक्षस्य अधः नृत्यभङ्गीम् आश्रित्य स्थितवती । मुनिः एकाग्रचित्तः सन् तां नखशिखान्तं दृष्ट्वा चित्रलेखने मग्नः । केषुचित् एव क्षणेषु चित्रलेखनं समाप्य सः चित्रं तस्याः हस्ते दत्तवान् ।

चित्रं दृष्ट्वा राजनर्तकी मुनिम् उद्दिश्य - ''भवता रचितं चित्रम् अत्युत्तमम् इत्यत्र नास्ति सन्देहः । किन्तु तदर्थं भवता स्वीकृतं धनम् अधिकमेव । सर्वेभ्यः स्वीकृतं धनं मरणसमये किं नेष्यते भवता ?'' इति उक्त्वा त्वरया यानम् आरुह्य गता एव ।

एवमेव दिनानि गतानि । चित्रलेखनेन धनसम्पादनं कुर्वन्नेव आसीत् मुनिः । किन्तु



एकस्मिन् दिने सः मुनिः चित्रलेखनकार्यं परित्यक्तवान्, ध्यानमात्रस्य पाठनम् अनुवर्तितवान् । राजनर्तक्या यदा एषः विषयः ज्ञातः तदा तस्य कारणं ज्ञातुम् इच्छन्ती सा आश्रमम् आगता ।

पूर्वं यदा आगतम् आसीत् तदा मार्गः असमीचीनः आसीत् । मार्गः निम्नोन्नतः सन् शिलाखण्डैः पूर्णः आसीत् । किन्तु इदानीं सर्वथा स्वच्छः, ऋजुश्च आसीत् । तया यस्मिन् दिने आगतं तच्च वैशाखपूर्णिमादिनम् ।

आश्रमस्य प्राङ्गणे महान् मण्डपः दृश्यते स्म । तेन आश्चर्यचकिता अभवत् सा । मण्डपे वेदिकायाः उपरि सोमशेखरमुनेः प्रधानः शिष्यः गम्भीरमुद्रया उपविष्टः सन् पुरतः स्थितान् भक्तान्, शिष्यान् च उद्दिश्य भाषणं कुर्वन् असीत् ।

तेन एवम् उक्तम् – ''भानुप्रकाशानन्दः सोमशेखरमुनेः गुरुः । ध्यानमन्दिरम् एकं निर्मातव्यम् इति तस्य मनसि इच्छा आसीत् । किन्तु सा न पूर्णा एव । तावता सः मुक्तिं गतः । किन्तु अस्माकं गुरुः सोमशेखरमुनिः गुरोः इच्छां पूरयितुं दृढनिश्चयः सन् तदर्थम् अहोरात्रं परिश्रमं कृतवान् । जनाः एतं मुनिम् लोभिनं, स्वार्थपरं च अवदन् । विविधैः शब्दैः तम् अनिन्दन् च । किन्तु तत्सर्वम् अगणयन् अस्मद्गुरुः चित्रलेखनेन प्राप्तेन धनेन गुरोः ताम् इच्छां पूरयामास । भक्तानां शिष्याणां च उपकाराय तपः कर्तुं सः इदानीं वनं गतः अस्ति । तस्य सः श्रमः एव स्वच्छस्य मार्गस्य, एतस्य ध्यानमन्दिरस्य च निर्मितेः मूलं कारणम्'' इति ।

एतानि वचनानि श्रुतवत्याः राजनर्तक्याः मनः खिन्नं, पश्चात्तापेन दग्धं च । 'सः मुनिः लोभी स्वार्थपरः च इति मया यत् चिन्तितं तत् तु सर्वथा असमीचीनम् एव आसीत् । सः महात्मा परोपकारी च आसीत् इत्यत्र नास्त्येव सन्देहः' इति विचिन्तयन्ती सा दुःखेन संलग्ना सती मनसि एव गुरुं क्षमां याचितवती ।

ततः सा स्वस्य देहे स्थितानि सर्वाणि आभरणानि अवमुच्य ध्यानमन्दिराय दत्तवती । ततः तस्याः मनः नितरां प्रशान्तम् अभवत् ।

मनसि पवित्रं भावं वहन्ती सा किञ्चित् – कालानन्तरं ततः प्रस्थिता ।





# भल्लूकमान्त्रिकः

## २१

*[कालीवर्मा सुरङ्गमार्गे गत्वा विरागिणः मन्त्रदण्डं स्वीकृतवान् । ततः तेन जितकेतोः उद्यानं प्रति गतम् । तस्मिन् एव समये राजा जितकेतुः मायामर्कटेन सह तत्र आगतवान् । राजा विरागिणं तच्छिष्यान् च आगमनकारणम् अपृच्छत् । तदा विरागी 'मन्त्रदण्डः' 'श्यामगुप्तः' इति शब्दद्वयम् उच्चैः अवदत् । तदनन्तरम् ...]*

विरागिणः वचनस्य तात्पर्यं राज्ञा न ज्ञातम् । सः क्रोधेन एव अवदत् - ''अये असम्बद्धप्रलापिन् ! संन्यासिन् ! किम् एतत् उच्यते भवता ? मन्त्रदण्डः क्व ? श्यामगुप्तश्च कः ?'' इति ।

तदा विरागी अवदत् - ''महाराज ! अहं कश्चन विरागी अस्मि । 'संन्यासिन्' इति सम्बोधयता भवता मम महत् अपमाननं कृतम् । विरागी अन्यः, संन्यासी अन्यः एव । तयोः भेदः किं भवता न ज्ञायते ?'' इति ।

एतत् वचनं श्रुत्वा राजा निर्वचनः जातः । तदा मायामर्कटः क्रोधेन अवदत् - ''भोः, कपटविरागिन् ! किं विषयान्तरप्रस्तावेन ? अप्रस्तुतं मा जल्पतु । आदौ वदतु - मम मन्त्रदण्डः केन चोरितः ? सः किं भवता दृष्टः ?'' इति ।

विरागी मायामर्कटस्य दिशि आश्चर्यमिश्रितां दृष्टिं प्रसार्य शिष्यौ उद्दिश्य अपृच्छत् - ''चन्द्रशिलाराज्यस्य नूतनः मन्त्री किम् एषः एव ?'' इति ।



''आं, गुरुवर्य ! एषः एव अस्ति अमात्यः मर्कटवर्यः'' इति उक्तवन्तौ शिष्यौ ।

तदा मायामर्कटः क्रोधेन पुनः अवदत् – ''यत् भवता दृष्टं तत् अविलम्बेन वदतु । अन्यथा एषः मम खड्गः भवतः शिरसः छेदं करिष्यति'' इति ।

तदा कश्चन शिष्यः मुखे चिन्तालक्षणानि वहन् अवदत् – ''गुरुवर्य ! वस्तुस्थितिम् एतं वदतु तावत् भवान् । तेन वयं पारितोषिकम् अपि प्राप्नुयाम । नगरस्य उत्तरस्यां दिशि स्थितायाः धर्मशालायाः पुरतः स्थितस्य भवनस्य स्वामिनः श्यामगुप्तस्य गृहे अस्माभिः मन्त्रदण्डः दृष्टः खलु ?'' इति ।

यावत् विरागी किमपि वक्तुम् उद्युक्तः तावता मायामर्कटः एव अवदत् – ''अये मूर्ख ! इतः परं किं भवतः गुरोः कथनेन ? भवतः कथनात् एव सर्वम् अवगतम् अस्ति । महाराज ! अविलम्बेन एव श्यामगुप्तस्य गृहं प्रति भटाः प्रेषणीयाः, मन्त्रदण्डः आनाययितव्यः च'' इति ।

राजा करताडनम् अकरोत् । तत् श्रुत्वा कश्चन भटः धावन् आगत्य उपस्थितः । राजा तस्मै विरागिणं दर्शयन् अवदत् – ''भोः, कैश्चित् भटैः सह भवान् एतेन विरागिणा सह श्यामगुप्तस्य गृहं गत्वा अविलम्बेन मन्त्रदण्डम् आनयतु'' इति ।

यावत् सः भटः विरागिणा सह प्रस्थातुम् उद्युक्तः तावता दुर्गभित्तेः अपरपार्श्वतः शङ्खनादध्वनिः श्रुतः ।

तं नादं श्रुत्वा मायामर्कटः महता उत्साहेन – ''महाराज ! एषः शङ्खनादः मम गुरुणा महानुभावेन मिथ्यामिश्रेण कृतः । अस्माकं सर्वाणि कष्टानि अपगतानि इति चिन्तयितुम् अर्हति भवान् इदानीम् । अस्माकं गुरुः भल्लूकमान्त्रिकं, दुर्मुखराजं, कालीवर्माणं, राक्षसम् उग्रदण्डं च संहरिष्यति । अचिरात् एव चक्रवर्ती भविष्यति भवान्'' इति वदन् दुर्गभित्तिदिशि धावितुम् उद्युक्तः ।

राजा जितकेतुः स्कन्धे गृहीत्वा तं स्थगयित्वा अवदत् – ''महामात्य ! मम सैनिकाः सामन्तः सूर्यभूपतिः च तस्मात् घोरराक्षसात् भल्लूकमान्त्रिकात् च मदीयं दुर्गं किं रक्षितुम् अर्हन्ति ? यदि भवान् अपि मया सह न तिष्ठेत् तर्हि को वा माम् इतिकर्तव्यताम् उपदिशेत् ? मन्त्रिणं जीवगुप्तम् अपमानयन्तः वयम् इतः प्रेषितवन्तः यत् तत् अनुचितं जातं स्यात् इति भाति'' इति ।

“भोः, राजन् ! अलं चिन्तया । भवतः प्राणानाम् अपायः कोऽपि न भविष्यति” इति वदन् ततः वेगेन निर्गतवान् मायामर्कटः ।

गुल्मानां पृष्ठतः स्थित्वा सर्वं पश्यन् स्थितः कालीवर्मा 'इतः निर्गमनाय इदानीं सुसमयः' इति चिन्तयित्वा यावत् निर्गमनाय उद्युक्तः तावता सामन्तः सूर्यभूपतिः दीर्घं निश्श्वसन् तत्र आगत्य - “महाराज ! अहम् इदानीम् एव मम दुर्गं प्रति गच्छन् अस्मि । कश्चन राक्षसः शङ्खनादशीलेन शिष्येण सह आगत्य मम दुर्गस्य भित्तौ रन्ध्रं कर्तुं प्रयासं कुर्वन् अस्ति इति श्रूयते । दुर्गस्य अन्तः मम पत्नी-पुत्र्यौ स्तः, केचन एव सैनिकाः सन्ति तत्र” इति सातङ्कम् अवदत् ।



तदा राजा जितकेतुः आश्चर्यम् अनुभवन् - “अहो, सर्वं विलक्षणम् इव अस्ति ! कश्चन राक्षसः भल्लूकमान्त्रिकः च मम दुर्गं वशीकर्तुं प्रयासं कुरुतः । एवं स्थिते अपरस्य राक्षसस्य मान्त्रिकस्य च उपस्थितिः कथं स्यात् ? किम् एतत् विचित्रम् !” इति अवदत् ।

अग्रे किं करणीयम् इति अजानन् राजा जितकेतुः यदा इतस्ततः दृष्टिं प्रसारयन् आसीत् तदा कालीवर्मा तस्य पुरतः उपस्थाय अवदत् - “महाराज ! इदानीम् अहं शत्रुत्वेन अत्र न उपस्थितः । अतः खड्गः ग्रहीतव्यः नास्ति । भवान् इदानीं कीदृशीम् असहायकताम् अनुभवति इति अहं जानामि । भवतः मन्त्री मायामर्कटः दुर्गभित्तिम् अतिक्रम्य निर्गतः अस्ति एतावता एव” इति ।

“भवान् कालीवर्मा ननु ? बहोः कालात् पूर्वम् एव भवतः शिरसः छेदः आदिष्टः आसीत् मया” इति कालीवर्माणं दृष्ट्वा साश्चर्यम् अवदत् राजा जितकेतुः ।

एतत् श्रुत्वा हसन् अवदत् कालीवर्मा - “महाराज ! सा च प्राचीना कथा । अहं राजा अस्मि इति अहङ्कारः आसीत् तदा भवतः । इदानीं तु घोरया असहायकतया आवृतः अस्ति भवान्” इति ।

तदा सामन्तं सूर्यभूपतिं पश्यन् कालीवर्माणम् अपृच्छत् जितकेतुः - “कालीवर्मन् ! एषः सूर्यभूपतिः अन्यस्य राक्षसस्य मान्त्रिकस्य च उपस्थितिं वदन् अस्ति । एकदा एव उभयोः मान्त्रिकयोः, राक्षसयोः च उपस्थितिः अत्र कथम् ?” इति ।

“महाराज ! एतस्य सर्वस्य मूलम् अस्ति उभयोः मान्त्रिकयोः वैरं, द्वेषसाधनप्रवृत्तिः च । तौ उभौ अपि ब्रह्मपुत्रनदस्य उत्पत्तिस्थाने



प्राचीनमन्दिरे निवसतः भल्लूकेश्वरस्य भक्तौ स्तः । तयोः अन्यतरस्य नाम भल्लूकपादः इति । तस्य शिष्यः भल्लूकमान्त्रिकः अत्र उपस्थितः अस्ति । अपरस्य मान्त्रिकस्य नाम मिथ्यामिश्रः इति । तस्य शिष्यः अस्ति अयं मायामर्कटः । ययोः राक्षसयोः नाम श्रूयते तौ तु भ्रातरौ एव । तयोः अन्यतरः उग्रदण्डः अस्माभिः सह अस्ति । तस्य भ्राता कालदण्डः तान्त्रिकेण मिथ्यामिश्रेण बन्दीकृतः अस्ति'' इति विवृतवान् कालीवर्मा ।

यावत् कालीवर्मणः वचनं न समाप्तं तावता एव सामन्तः सूर्यभूपतिः अग्रे आगत्य – ''महाराज ! सः एव मान्त्रिकः राक्षसेन सह गत्वा मम दुर्गं वशीकर्तुं प्रयतमानः स्यात् । मदीयं दुर्गम् अवश्यं रक्षणीयम् एव । एषोऽहम् आगच्छामि तावत्'' इति वदन् वेगेन ततः निर्गतवान् ।

तदा राजा जितकेतुः चिन्तामिश्रितेन स्वरेण अवदत् – ''कालीवर्मन् ! किं कर्तुम् इच्छति भवान् ? भवतः एकस्मिन् हस्ते खड्गः अस्ति । अपरस्मिन् हस्ते मन्त्रदण्डः अपि दृश्यते । अहं राज्यशासने समर्थः न स्यां कदाचित्, किन्तु शौर्ये मम सामर्थ्यम् अक्षुण्णम् एव अस्ति । भवान् मयि खड्गं प्रयोक्तुम् इच्छति उत मन्त्रदण्डम् ?'' इति ।

कालीवर्मा मन्त्रदण्डं खड्गं च भूमौ क्षिप्त्वा अवदत् – ''महाराज ! मया न खड्गः प्रयोक्तुम् इष्यते, न वा मन्त्रदण्डः । भवतः शासनकाले यानि अनुचितानि कृत्यानि प्रवृत्तानि तेषाम् उत्तरदायी भवति मन्त्रिगणः इव भवान् अपि । तथापि इदानीं तु भवतः राज्यस्य रक्षणं ममापि कर्तव्यम् इति भावयामि अहम्'' इति ।

एतत् वचनं श्रुत्वा राजा जितकेतुः नितरां सन्तुष्टः । सः भूमौ पतितं खड्गं कालीवर्मणे दत्तवान् । तावता एव सुरङ्गमार्गेण राजा दुर्मुखः भल्लूकमान्त्रिकः च उपरि आगतौ ।

दुर्मुखः कोषात् खड्गम् आकृष्य कालीवर्माणम् उद्दिश्य – ''कालीवर्मन् ! अस्माभिः चिन्तितम् आसीत् यत् भवान् विपत्तिग्रस्तः स्यात् इति । किन्तु भवान् तु अत्र जितकेतुना सह सरससँल्लापे मग्नः दृश्यते । भवन्तम् इदानीम् एव अहं मम खड्गेन संहरिष्यामि'' इति उक्त्वा तस्य संहाराय अग्रे आगतः ।

कालीवर्मा झटिति स्वस्य खड्गम् उन्नीय तेन दुर्मुखस्य प्रहारं निवारयन् अवदत् – ''दुर्मुखवर्य ! अलं त्वरया । एतस्य पूर्वजान् एव सेवमानाः मम पूर्वजाः स्वर्गं प्राप्तवन्तः ।



अतः अविचिन्त्य एतस्य संहाराय प्रयासः अनुचितः एव भवेत्'' इति ।

दुर्मुखः उत्तररूपेण यावत् किमपि वक्तुम् उद्युक्तः तावता भूमौ पतितं मन्त्रदण्डम् उन्नीय भल्लूकमान्त्रिकः अवदत् -''काली-वर्मन् ! भवता युक्तम् एव उक्तम् । मम गुरोः भल्लूकपादस्य परमशत्रुः मिथ्यामिश्रः राक्षसेन कालदण्डेन, शिष्येण जम्बुकेश्वरेण च सह एतस्मिन् प्रदेशे अटन् अस्ति । मम गुरोः हानिं कल्पयितुं सः अत्र आगतवान् स्यादिति अहं चिन्तयामि । अतः अस्माभिः भल्लूकपादपर्वतं प्रति गन्तव्यं भवेत्'' इति ।

''यदि अस्माभिः तत्र गम्येत तर्हि अत्र तान्त्रिकस्य अत्याचारं को वा निवारयेत् ? मया श्रुतं यत् सः सामन्तस्य सूर्यभूपतेः दुर्गं वशीकर्तुं गतवान् इति । तस्मिन् दुर्गे इदानीं किमपि प्रबलं सैन्यं नास्ति'' इति अवदत् कालीवर्मा ।

तदा भल्लूकमान्त्रिकः असन्तोषं प्रकटयन् उक्तवान् - ''एतत्सर्वं मया सुरङ्गमार्ग-प्रवेशात् पूर्वम् एव सूर्यभूपतिमुखात् श्रुतम् अस्ति । राजसामन्तादीनां व्यवहारे किमर्थम् अस्माभिः चञ्चूप्रवेशः करणीयः इत्यस्ति मय प्रश्नः'' इति ।

तदा कालीवर्मा क्रोधेन मान्त्रिकं पश्यन् अवदत् - ''अहम् एतस्मिन् राज्ये जातः । एतस्याः भूमेः पुत्रः अस्मि अहम् । एतस्य राज्यस्य, राज्यपालकस्य च हितचिन्तनं मम आद्यं कर्तव्यम् । वस्तुतः अज्ञाते पर्वते निवसतः मान्त्रिकस्य साहाय्यार्थं प्रयत्नः एव न्याय्यः न स्यात्'' इति ।

एतत् श्रुत्वा आश्चर्यम् अनुभवन् भल्लूक-मान्त्रिकः अवदत् - ''शिष्योत्तम ! काली-वर्मन् ! किं क्षणाभ्यन्तरे भवान् परि-वृत्तः जातः ? मन्त्रदण्डम् आनीतवते जनाय अर्धराज्यं दत्तकपुत्री च दास्यते इति राज्ञा जितकेतुना यत् घोषितं ततः किं भवान् आकृष्टः जातः ?'' इति ।

''अत्र अर्धराज्यस्य राजकुमार्याः च प्राप्तेः प्रसक्तिः एव नास्ति । यतः मया मन्त्रदण्डः महाराजाय न दत्तः, अपि तु भवते प्रदत्तः'' इति वदन् कालीवर्मा राजानं जित-केतुम् अपश्यत् । तावता राक्षसः उग्रदण्डः, वधकभल्लूकः च तत्र उपस्थितौ ।

राजा जितकेतुः उग्रदण्डं दृष्ट्वा क्षणं यावत् भीतः । तथापि आत्मनि धैर्यं प्रपूर्य सः अवदत् - ''मम तु अपत्यं नास्ति । अतः

राज्यं कस्मै दातव्यम् इति चिन्ता मां बाधते । सूर्यभूपतेः पुत्रीम् अहं दत्तकरूपेण स्वीकरिष्यामि, कालीवर्मणे तां दास्यामि अपि । सः एव चन्द्रशिलायाः राजा भवतु'' इति ।

भल्लूकमान्त्रिकः उच्चस्वरेण – ''गुरुवर्यः भल्लूकपादः जयतात्' इति सकृत् उद्घोष्य अवदत् – ''भवन्तः वस्तुस्थितिम् अजानन्तः अत्र आकाशे सौधं निर्मान्तः सन्ति । सः दुष्टः तान्त्रिकः मिथ्यामिश्रः एतावता एव सूर्यभूपतेः पुत्रीम् अपहृत्य स्वस्य वसतिभूतं पर्वतं प्रति नीतवान् स्यात् अपि । आ बहोः कालात् सः भल्लूकेश्वर्याः पूजायै योग्याम् अर्चिकाम् अन्विष्यन् अस्ति'' इति ।

''मयि जीवति, सः एतादृशं दुस्साहसं कर्तुं नार्हति सर्वथा'' इति वदन् कोषात् खड्गम् आकृष्टवान् कालीवर्मा ।

''ममापि एषा एव प्रतिज्ञा'' इति वदन् उग्रदण्डः अपि स्वस्य गदाम् उन्नीतवान् ।

तदा भल्लूकमान्त्रिकः अवदत् – ''उभयोः अपि भवतोः प्रतिज्ञा अवितथा भवतु इति ममापि इच्छा । मिथ्यामिश्रतः कालदण्डः कथं रक्षणीयः इत्यपि चिन्तनीयं भवता । औषधं दत्त्वा तस्य मतिं नाशयित्वा स्वस्य कार्याय तस्य उपयोगं कुर्यात् अपि सः । अतः तद्विषये अपि अवधानं भवतु'' इति वदन् प्रस्थितवान् भल्लूकमान्त्रिकः ।

यावत् सः सुरङ्गमार्गसमीपं गतः तावता गुल्मानां पृष्ठभागतः 'जय शिरीषभैरव !' इति घोषयन् वधकभल्लूकः परशुं चालयन् पुरतः उपस्थाय अवदत् – ''मान्त्रिकभल्लूक ! भवतः मन्त्रप्रभावतः अपूर्णतया मानवरूपं प्राप्तवतः मम का गतिः स्यात् ? भवतः गुरोः, भवतः, मम च नाम्नि भल्लूकशब्दः भागशः अस्ति इत्यतः नितरां भ्रमः । भवान् मां पुनरपि पूर्णमानवरूपं कुर्यात् । अन्यथा अहं मम परशुना भवतः शिरः कर्तयिष्यामि'' इति ।

एतत् श्रुतवान् भल्लूकमान्त्रिकः गमनं स्थगयित्वा – ''भवान् न वधकभल्लूकः, प्रत्युत एतस्य नगरस्य प्रधानवधकः एव । इतःपरं भवान् यथापूर्वं शिरीषवनं गत्वा मृत्युदण्डं प्राप्तवतां शिरः छेदयितुम् अर्हति'' इति वदन् विद्युद्वेगेन सुरङ्गस्य अन्तः गतः ।

*(अग्रिमे मासे समाप्तिः)*



# वेताल-कथा

## सुसेनस्य समस्या-परिहारक्रमः

त्रिविक्रमः स्वीकृतं कार्यं त्यक्तुम् अनिच्छन् पुनरपि वृक्षस्य समीपं गत्वा शाखायां लम्बमानं शवं स्कन्धे आरोप्य यथापूर्वं मौनेन श्मशानं प्रति प्रस्थितवान् । तदा शवान्तर्गतः वेतालः अवदत् - ''अये राजन् ! भवान् कस्यचित् लक्ष्यस्य साधनाय बद्धकटिः अस्ति इति तु स्पष्टम् एव । भवतः एतस्य परिश्रमस्य दर्शनात् मम मनसि भावना उदेति यत् राज्ञः सुसेनस्य कथा श्रावणीया इति । तेन लक्ष्यसाधनाय यादृशः मार्गः आश्रितः तादृशः एव मार्गः यदि भवता अपि आश्रीयेत तर्हि भवान् अपि सफलतां प्राप्नुयात् कदाचित् । अतः अहं तस्य कथां श्रावयामि । तस्याः श्रवणात् भवतः मार्गायासः



अपि परिहृतः भवेत् । तां श्रद्धया शृणोतु तावत्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा -

सुसेनः पुष्पकदेशस्य राजा । सः स्वस्य समस्यानां निवारणाय कश्चित् विलक्षणं मार्गम् आश्रयति स्म । स्वसमस्यां सः सामान्यं कञ्चित् जनं कथयति स्म । तेन सूचितम् उपायम् अवलम्ब्य परिहारमार्गं प्राप्नोति स्म सः । यः योग्यम् उपायं सूचयति तस्मै यथायोग्यम् उपायनम् अपि ददाति स्म सः ।

कदाचित् राजमाता रुक्मिणी तीव्रतया अस्वस्था जाता । श्वश्र्वाः अस्वास्थ्यसमये तस्याः सेवां स्नुषा कुर्यात् इति तु परम्परा । राजवंशीयाः सर्वे एतां परम्परां पालयन्ति स्म । किन्तु राज्ञी नन्दिनी वृद्धायाः श्वश्र्वाः सेवां कर्तुं न इच्छति स्म । अतः सा अस्वास्थ्यम् अभिनयन्ती शय्याम् आश्रितवती ।

राजवैद्यः पुण्डरीकः एव उभयोः अपि चिकित्सां करोति स्म । अल्पे एव काले तेन अवगतं यत् राज्ञी नन्दिनी वस्तुतः अस्वस्था न इति । अतः सः बलवर्धकम् औषधं किमपि तस्यै दत्त्वा अविलम्बेन ततः निर्गच्छति स्म । किन्तु राजमातुः चिकित्सावसरे सः औषधं दत्त्वा तस्य परिणामं निरीक्षमाणः दीर्घकालं तत्र तिष्ठति स्म ।

वैद्यस्य चिकित्सायाः कारणतः राजमाता अल्पे एव काले ज्वरमुक्ता जाता । वैद्यः राजानम् असूचयत् यत् विश्रान्त्यर्थं राजमाता शीतले प्रदेशे यदि वसेत् तर्हि वरं स्यात् इति । एतदनुगुणं राज्ञा माता हिमनगरीं प्रति प्रेषिता ।

राजमातुः सेवार्थं माम् अपि हिमनगरीं प्रेषयेयुः इति चिन्तयन्ती राज्ञी अस्वास्थ्यस्य अभिनयं न परित्यक्तवती एव । दीर्घः कालः अतीतः चेदपि राज्ञ्याः अस्वास्थ्यं न अपगतम् इत्यतः राजा वैद्यम् एतस्य कारणं पृष्टवान् ।

तदा राजवैद्यः अवदत् - ''प्रभो ! राज्ञी मानसिकरोगेण पीडिता स्यादिति मम सन्देहः । अतः तस्याः मनः सन्तुष्टं यथा स्यात् तथा किमपि क्रियतां कृपया । तस्मात् एव तस्याः अस्वास्थ्यम् अपगच्छेत्'' इति ।

राजा राज्ञीं नन्दिनीं वैद्यस्य आशयम् उक्त्वा अपृच्छत् - ''किं कृतं चेत् भवत्याः मनः सन्तुष्टं भवेत् ?'' इति ।

तदा राज्ञी राजवैद्यस्य पुण्डरीकस्य विषये महान्तं कोपं कुर्वती असन्तोषमिश्रितेन स्वरेण अवदत् - ''पुण्डरीकः मम अस्वास्थ्यविषये अवधानं न दत्तवान् एव । अतः एव सः मां

मानसिकरोगिणीं कथयति । अतः अन्यं कश्चित् वैद्यं मम चिकित्साकार्ये नियोजयतु । तेन मम मनः सन्तुष्टं भवेत्'' इति ।

सुसेनस्य विश्वासः आसीत् यत् पुण्डरीकः उत्तमः वैद्यः इति । पुण्डरीकं चिकित्सातः अपनीय अन्यस्य वैद्यस्य नियोजनं समुचितं न भवेत् इति कथं ज्ञापनीयम् इति न ज्ञातं तेन । तेषु एव दिनेषु हिमनगरीतः राजमाता वार्तां प्रेषितवती यत् पुण्डरीकः धन्वन्तरि-सदृशः, अतः अमूल्यानि उपायनानि दत्त्वा यथायोग्यं सः सत्करणीयः इति ।

पत्न्याः कथनं पालयता यदि पुण्डरीकः राजवैद्यपदात् च्याव्येत तर्हि माता असन्तुष्टा भवेत्, मातुः वचनं पालयता पुण्डरीकः सत्कृतः चेत् पत्नी कुपिता भवेत् । अतः किं करणीयम् इति राज्ञा न ज्ञातम् ।

एतस्याः समस्यायाः निवारणोपायं प्राप्तुं कदाचित् सः रात्रौ भूस्वामिवेषेण जनैः सह मेलनाय नगरं गतः । नगरे दिनपालनामकस्य वणिजः परिचयः जातः । सुसेनः तं स्वसमस्यां निवेदितवान् ।

दिनपालः क्षणकालं विचिन्त्य अवदत् - ''एतादृशी समस्या यदा उपस्थिता भवति तदा असत्यवक्तुः उपकारः करणीयः । तदीयः उपकारः क्रियमाणः अस्ति इत्यंशः तेन अवगतः स्यादपि'' इति ।

अनन्तरदिने सुसेनः नन्दिनीसमीपं गत्वा अवदत् - ''अस्माकं राजवैद्यस्य पृष्ठतः मया गुप्तचराः प्रेषिताः । तस्मात् अवगतं यत् सः भवत्यां विशेषादरवान् एव इति । भवती श्वश्र्वाः सेवां कुर्यात् इत्येतत् तस्य सम्मतं न



आसीत् । अतः एव सः किमपि कारणम् उक्त्वा भवत्याः श्वश्रूं दूरप्रदेशं प्रति प्रेषितवान् । तेन यत् कृतं तत् भवत्याः हितं मनसि निधाय एव'' इति ।

इदानीं नन्दिनी अवगतवती यत् वैद्यः उत्तमः एव इति । आत्मना तद्विषये यत् चिन्तितं तत् अनुचितम् इति सा अवगतवती । पश्चात्तापं प्रकटय्य सा पतिम् अवदत् यत् राजवैद्याय यथायोग्यम् उपायनानि दातव्यानि इति ।

एवं समस्या परिहृता इत्यतः राजा नितरां सन्तुष्टः । पुनः कदाचित् भूस्वामिवेषेण गत्वा वणिजा दिनपालेन मिलित्वा सः अवदत् - ''भवतः उपायस्य अनुसरणात् उत्तमम् एव फलं प्राप्तम् । भवादृशः यदि राज्ञः मार्ग-दर्शकः भवेत् तर्हि वरं स्यात् । राजास्थाने मम परिचिताः बहवः सन्ति । तेषां द्वारा



किम् अहं राज्ञः आस्थाने भवतः नियुक्तिं कारयेयम् ?'' इति ।

दिनपालः एतं प्रस्तावं निराकुर्वन् अवदत् - ''राजधान्यां वासः मह्यं न रोचते । तत्र वासात् मम अस्वास्थ्यं भवेत् । मम वैद्यः वदति यत् मया लक्ष्मीपुरे वासः करणीयः इति । मया तत्र वासाय कस्यचित् गृहस्य क्रयणाय प्रयासः कृतः । एकं गृहं दृष्टम् अपि । तत् ग्रामाधिकारिणः अधीनम् अस्ति । ग्रामाधिकारी तत् न विक्रेतुम् इच्छति, न वा भाटकरूपेण दातुम् । यदि राजास्थाने भवतः प्रभावः स्यात् तर्हि भवान् लक्ष्मीपुरस्थं तत् गृहं कृपया मह्यं दापयतु'' इति ।

तदा राजा विश्वासोत्पादकेन स्वरेण अवदत् - ''भवतः इच्छा पूर्णा जाता इत्येव भवान् भावयतु । श्वः एव तत् गृहं भवतः भविष्यति'' इति ।

लक्ष्मीपुरस्य ग्रामाधिकारी दुराचारः स्वार्थी च आसीत् । तस्य उभयोः गृहयोः मध्ये यत् रिक्तं स्थानम् अस्ति तत् तु ग्रामस्य । तस्मिन् स्थले तद्गृहजनाः अवकरादीन् क्षिपन्ति स्म ।

अनन्तरदिने सुसेनः वेषान्तरं धृत्वा दिनपालेन सह लक्ष्मीपुरं गतवान् । सुसेनः दिनपालस्य परिचयम् उक्त्वा ग्रामाधिकारिणम् उद्दिश्य - ''एषः राज्ञः आप्तेषु अन्यतमः । एतस्मै भवता स्वस्य रिक्तं गृहं विक्रेतव्यम् । एषा राजाज्ञा'' इति उक्त्वा राजमुद्राङ्कितम् आज्ञापत्रं दर्शितवान् ।

एतत् दृष्टवान् ग्रामाधिकारी निरुपायः सन् गृहस्य विक्रयणाय सज्जः जातः । गृहक्रयणव्यवहारः यदा समाप्तः तदा राजा ततः प्रतिगतवान् । ततः अनतिकाले एव दिनपालः तस्मिन् गृहे सपरिवारं वासम् आरब्धवान् ।

कदाचित् दिनपालः उभयोः गृहयोः मध्ये स्थितम् अवकरराशिं प्रदर्शयन् ग्रामाधिकारिणम् अवदत् - ''भवान् स्वस्य गृहस्य जनान् वदतु यत् इतः परम् अत्र अवकराः न क्षेप्तव्याः इति'' इति ।

''अत्र तु आ बहोः कालात् अवकरराशिः अस्ति एव । न हि एतत् उद्यानम्'' इति अवदत् ग्रामाधिकारी ।

तत् स्थलं सार्वजनिकम् इति जानन् दिनपालः तत्र स्वच्छतां कारयित्वा पुष्पसस्यानि आरोपितवान् । किन्तु ग्रामाधिकारी एतत् न असहत । सः रहसि धेनुवृषभादीन् प्रेषयित्वा पुष्पसस्यानां नाशनाय प्रयासम् अकरोत् । तस्मात् दिनपालः उद्यानं परितः वृतिं कारित-

वान् । उद्यानस्य रक्षणाय तेन कश्चन उद्यान-पालकः नियुक्तः अपि । सः उद्यानपालकम् असूचयत् – 'ये इच्छन्ति तेभ्यः पुष्पाणि निश्शुल्कं दातव्यानि' इति । एतेन उद्यानविषये जनानाम् आदरः प्रवृद्धः ।

लक्ष्मीपुरस्य ग्रामाधिकारिणः सर्वे व्यव-हाराः गुप्तचराणां द्वारा राज्ञा ज्ञायन्ते स्म एव । ग्रामाधिकारिणः निग्रहः कथम् इति यावत् सः चिन्तयन् आसीत् तावता बहुगुणनामकस्य सुवर्णकारस्य पुरतः काचित् समस्या उप-स्थिता । तस्य मातुः सेविकायाः गङ्गायाः गृहे पत्न्याः सुवर्णहारः प्राप्तः, तथैव पत्न्याः सेविकायाः यमुनायाः गृहे मातुः मौक्तिकहारः प्राप्तः च । बहुगुणस्य माता पत्नी च वदतः स्म यत् आवयोः सेविके निरपराधे इति । गङ्गा यथायोग्यं दण्डनीया इति पत्नी, यमुना कठोरं दण्डनीया इति माता च अनुरोधं कुरुतः स्म अपि । एतादृशे प्रसङ्गे किं करणीयम् इति अजानन् बहुगुणः राजानं स्वसमस्यां विस्तरेण निवेदितवान् ।

सर्वं श्रुत्वा राजा सुसेनः हसन् अवदत् – ''एतादृशी समस्या न केवलं भवतः, अपि तु राज्ञः अपि भवति । भवतः समस्यायाः परिहारोपायं सूचयितुं समर्थः तु एकः एव । दिनपालः नाम वणिक् लक्ष्मीपुरे निवसति । अहम् एकं पत्रं भवते दास्यामि । भवतः समस्यायाः परिहारं यः करिष्यति सः एव तस्य ग्रामस्य अधिकारी भविष्यति, ग्राम-सम्बद्धायाः सार्वजनिकभूमेः उपयोगः कथं करणीयः इत्यत्र निर्णेता अपि सः एव भविष्यति'' इति ।



राजमुद्राङ्कितं मुद्रितं तत् पत्रं स्वीकृत्य बहुगुणः लक्ष्मीपुरं गतवान् । तस्मिन् समये ग्रामाधिकारी ग्रामीणान् मेलयित्वा वदन् आसीत् – ''एषः दिनपालः ग्रामभूमिं वशी-कृत्य तत्र पुष्पसस्यानि आरोपितवान् अस्ति । एतत् तु अपराधाय । अतः एतस्य निमित्तं तेन यथायोग्यं दण्डनम् अनुभोक्तव्यम्'' इति ।

तावता बहुगुणः तत्र उपस्थितः । राज्ञः मुद्रितं पत्रं ग्रामाधिकारिणे दत्त्वा सः अवदत् – ''भूमेः समस्यायाः परिहारः, ग्रामाधिकारी अग्रे कः भवेत् इति निर्णयः च इदानीं भविष्यति । ग्रामाधिकारी विवेकी, अनुभवी च स्यात् । मम समस्यायाः परिहारं यः करिष्यति तस्य तादृशी योग्यता अस्ति इति सिद्धं भविष्यति'' इति ।

बहुगुणेन स्वस्य समस्या सर्वेषां पुरतः

श्राविता । समस्यायाः परिहाराय योग्यम् उपायं सूचयितुं न शक्तवान् ग्रामाधिकारी । तदा दिनपालः अग्रे आगत्य अवदत् - ''एतस्याः परिहारः सरलः । पत्नी वक्तव्या यत् मातुः सेविकायाः कीदृशं दण्डनं भवेत् इति वदतु इति । माता वक्तव्या यत् स्नुषायाः सेविकायाः दण्डनं कीदृशं स्यात् इति सूचयतु इति । तदा एषा समस्या परिहृता भविष्यति'' इति ।

बहुगुणः एतत् उत्तरं श्रुत्वा नितरां सन्तुष्टः सन् - ''बहूनि वर्षाणि यावत् अहं वाणिज्यक्षेत्रे कार्यं कृत्वा अनुभवं सम्पादितवान् अस्मि । तथापि एतादृशः परिहारोपायः मम मनसि न स्फुरितः । भवान् एव ग्रामाधिकारी भवितुं योग्यः'' इति उक्त्वा ग्रामाधिकारिणं पदात् च्यावयित्वा दिनपालं तत्र नियुक्तवान् ।

वेतालः एवं कथां समाप्य अवदत् - ''राजन् ! राजा स्वस्य समस्यायाः परिहारार्थं विलक्षणां काञ्चित् पद्धतिम् आश्रितवान् । किम् एतत् तस्य असमर्थतां न द्योतयति ? तस्य मार्गस्य आश्रयणात् तेन समस्यायाः परिहारः प्राप्तः स्यात् । तथापि स च मार्गः राजोचितः तु न आसीत् । एवं ननु ? दुराचारं ग्रामाधिकारिणं सः स्वयम् एव निवारयितुम् अशक्ष्यत् । तथापि किमर्थं तथा न कृतं तेन ? ग्रामभूमेः उपयोगः कीदृशः स्यात् इत्येषा समस्या महती तु न आसीत् । तथापि तस्याः परिहाराय बहुगुणस्य उपयोगः कथं स्वीकृतः ? मम एतेषां प्रश्नानां समाधानं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा मौनेन स्थातुम् अशक्तः त्रिविक्रमः अवदत् - ''समस्यायाः परिहारार्थम् अन्यस्य साहाय्यस्य स्वीकरणं कदापि दोषाय न । राजकुटुम्बस्य समस्या अन्येन यथा न ज्ञायेत तथा जागरूकता आश्रिता एव राज्ञा । ग्रामाधिकारिणः परिवर्तनं राज्ञा स्वयं यदि कृतं स्यात् तर्हि च्यावितः कीदृशः इति सर्वैः ज्ञातं न अभविष्यत् । अतः एव वणिजः बहुगुणस्य साहाय्येन राज्ञा एतत् कार्यं साधितम् । ग्रामहितम् एव तेन चिन्तितम् । एवं राज्ञः सर्वे व्यवहाराः औचित्यपूर्णाः एव सन्ति'' इति ।

एवं वदता राज्ञा मौनभङ्गः कृतः आसीत् । अतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान् ।






# वैणवीयं नृत्यम्

'मिजोराम्' इत्यस्य पदस्य अर्थः 'पर्वतीयजनानां भूमिः' इति । 'मि' इत्यस्य 'जनः' इत्यर्थः । 'जो' इत्यस्य 'पर्वतः' इत्यर्थः । 'राम्' इत्यस्य 'प्रदेशः' इत्यर्थः । मिजोरामराज्यीयाः जनाः वस्तुतः मङ्गोलियवंशीयाः । प्रायः त्रिशतवर्षेभ्यः पूर्वं ते बर्मातः (एतस्य अद्यतनं नाम म्यान्मार् इति) आगताः । ते यत्र वसन्ति स्म, सः पर्वतप्रदेशः बहूनि वर्षाणि यावत् दुर्गम्यः आसीत् । क्रिश्चियन्मतप्रचारकाः ऐदम्प्राथम्येन एतं प्रदेशं प्रविष्टवन्तः, क्रिस्तमतप्रचारम् आधिक्येन कृतवन्तश्च । अत एव अद्य मिजोरामीयेषु ९५% जनाः क्रिस्तमतीयाः । ते आङ्ग्लभाषया भाषन्ते, लिखन्ति, पठन्ति च । तत्रत्या स्थानीयभाषा अपि इदानीम् आङ्ग्ललिप्या एव लिख्यते ।



वर्षस्य नवसु मासेषु अत्र आधिक्येन वृष्टिर्भवति । एषा वृष्टिः वेणूनां वर्धने विशेषतः उपकरोति । अत्रत्याः तण्डुलादीन् वेणुकोटरेषु सङ्गृह्णन्ति । मिजोरामीयाः प्रायः कृषिमेव आधिक्येन अवलम्बन्ते इत्यतः तेषां पर्वाणि अपि कृषिपरम्परासम्बद्धानि एव भवन्ति ।

मिजोभाषया पर्व निर्दिश्यते 'कुट्'शब्देन । तेषां प्रमुखाणि त्रीणि पर्वाणि भवन्ति – चाप्चर्कुट्, मिम्कुट्, पौल्कुट् चेति ।

सर्वेषु प्रमुखेषु पर्वसु वैणवीयं नृत्यं भवेदेव । वैणवीये नृत्ये यः भागं गृह्णाति, तेन विशेषपरिणतिः प्राप्तव्या भवति । अन्यथा पादगतिस्खलनात् पतनम् अपायप्राप्तिश्च भवेत् ।

# राज्ञा अवगतः पाठः

कश्चन राजा आसीत् । तस्य उभौ पुत्रौ ।

तदीयं द्वितीयं पुत्रं निस्सन्तानः श्यालः स्वगृहं नीतवान् । मातुलस्य गृहे सन्तोषेण अवर्धत सः बालः । दश वर्षाणि सर्वं सुचारुतया एव आसीत् । किन्तु अनन्तरकाले अनूह्याः घटनाः घटिताः । ज्येष्ठः राजपुत्रः वैराग्यं प्राप्य संन्यासाश्रमम् अवलम्बितवान्, सुदूरे स्थिते पर्वते कुटीरं निर्माय वासम् आरब्धवान् च । अत्रान्तरे राज्ञः श्यालेन सन्तानः प्राप्तः आसीत् अपि । अतः द्वितीयः राजकुमारः प्रासादं प्रति आनीतः ।



आ बाल्यात् मातुलगृहे प्रवृद्धाय राजकुमाराय प्रासादपरिसरः न अरोचत । सर्वे अपरिचिताः एव आसन् तत्र । तस्मात् बालके असन्तोषः प्रवृद्धः । तस्य कोपशीलता रूक्षता चापि वृद्धिं गते । अध्ययने सः अनासक्तः जातः । विनयः विधेयता च तस्मिन् विलुप्ते ।

तस्य अध्ययनव्यवस्थार्थं राज्ञा महान्तः पण्डिताः नियुक्ताः । किन्तु तेषु कोऽपि तम् एकं दिनम् अपि अध्यापयितुं न शक्तः । अध्ययनाय तैः आदिष्टः बालः तिरस्कारेण पश्यन् शयनप्रकोष्ठं गत्वा शेते स्म । तर्जनं, भर्त्सनम्, आदेशः, भीतेः उत्पादनं, दण्डनम् इत्यादयः सर्वे उपायाः विफलाः जाताः । बोधनं तु सर्वथा न शृणोति स्म राजकुमारः । अतः सर्वे पण्डिताः राज्ञः असन्तोषसम्भावनाम् अपि उपेक्ष्य ततः निर्गताः ।

''राजकुमारे कापि दुष्टशक्तिः आविष्टा अस्ति इति भाति'' इति अवदत् मन्त्री ।

तदा पृष्टं राज्ञा– ''तस्याः निवारणं कथम् ?'' इति ।

''प्रायः तत् कर्तुं वयं न समर्थाः । राजधानीतः अनतिदूरे पर्वतमूले नद्याः तीरे

कश्चन संन्यासी निवसति। जनानां मेलनं सर्वथा अनिच्छन् एकान्ते निवसति सः। यदि भवान् एव गत्वा स्वसमस्यां निवेदयेत् तर्हि सः तद्विषये अवधानं दद्यात् अपि। राज-कुमारस्य परिष्कारः कथम् इति सः सूचयेत् अपि'' इति अवदत् मन्त्री।

राजा मन्त्रिणः प्रस्तावम् अङ्गीकृतवान्। ततः सः मुनेः आश्रमं गत्वा तं भक्त्या प्रणम्य स्वस्य परिचयम् अपि निवेदितवान्।

तदा मुनिः अवदत् - ''राजा भवान् मादृशस्य उपकारं कर्तुम् अर्हति। किन्तु मया राज्ञः भवतः कीदृशं साहाय्यं कर्तुं शक्येत ? भवतः आगमनस्य कारणं किम् ?'' इति।

''मुनिवर्य ! इदानीं पामरः जातः अस्मि अहमेव। प्रायः मादृशः दुःखी अन्यः न स्यात्'' इति वदन् राजा स्वसमस्यां विस्तरेण निवेदितवान्। मुनिः श्मश्रु आमृशन् क्षण-कालं नेत्रे निमील्य चिन्तनम् अकरोत्। ततः सः गम्भीरेण स्वरेण अवदत् - ''यदि भवान् व्याघ्रस्य मुखरोमाणि आनयेत् तर्हि अहं भवतः पुत्रस्य परिष्कारे साहाय्यं कुर्याम्। तानि मुखरोमाणि जीवतः व्याघ्रस्य स्युः। भवता एव सङ्गृहीतानि स्युः'' इति।

''व्याघ्रस्य मुखरोम्णां सङ्ग्रहः ! सर्वथा असाध्यम् एतत्'' इति अवदत् राजा।

''पुत्रस्य परिष्कारः यावान् क्लेशकरः तावान् क्लेशकरः तु न व्याघ्रस्य मुखरोम्णां सङ्ग्रहः। अतः प्रयत्यताम्'' इति उक्त्वा मुनिः आसनात् उत्थितवान्। राजा चिन्ताक्रान्तः सन् एव प्रासादं प्रत्यागतवान्।

राजोद्याने गुहायां कश्चन व्याघ्रः पालितः



आसीत् तेन। अतः सः व्याघ्रपालकम् आहूय अपृच्छत् - ''किं मया व्याघ्रः स्प्रष्टुं शक्येत ?'' इति।

''सर्वथा न शक्यते महाराज ! स्पर्शनं किं, तत्समीपे गमनमपि अपायकरम्। अहमपि तत्समीपं न गच्छामि। दण्डसाहाय्येन दूरात् एव तस्मै आहारं ददामि'' इति।

एतत् श्रुत्वा अपि राजा सर्वथा निराशः न जातः। कथमपि कार्यं साधनीयम् एव इति विचारः तस्य मनसि प्रबलः आसीत्। अतः अनन्तरदिने सः किञ्चित् आहारं स्वीकृत्य व्याघ्रगुहासमीपं गतवान्। दण्डसाहाय्येन आहारं व्याघ्रसमीपे स्थापयित्वा द्वारात् बहिः स्थितवान्। व्याघ्रः गाम्भीर्येण आगत्य राज्ञा दत्तम् आहारं स्व्यकरोत्, राजानं गाम्भीर्येण एव सकृत् अपश्यत् च।

राजा पक्षं यावत् एवमेव आचरत् । तदनन्तरदिने राजा आहारयुक्तः सन् गुहाद्वार-समीपे अतिष्ठत् । व्याघ्रः घुर्घुरायमाणः क्षण-कालं द्वारसमीपे अतिष्ठत् । ततः द्वाररन्ध्रे मुखं प्रसार्य राज्ञः हस्तस्थे पात्रे स्थितम् आहारम् असेवत च ।

एवमेव पुनरपि कानिचन दिनानि अतीतानि । एकस्मिन् दिने आहारस्वीकारस्य अनन्तरं व्याघ्रः जिह्वया राज्ञः हस्तस्य लेहनम् अकरोत् । अग्रिमेषु दिनेषु आहारसेवनसमये व्याघ्रः राज्ञः हस्तस्य लेहनं करोति स्म । केषाञ्चित् दिनानाम् अनन्तरं राजा धैर्यं वहन् व्याघ्रस्य शिरः अस्पृशत् ।

एवं मासात्मकः कालः अतीतः । इदानीं व्याघ्रः राजानं दृष्ट्वा न गर्जति । राजा अपि ततः न बिभेति । एकस्मिन् दिने राजा व्याघ्रेण सह प्रीत्या व्यवहरन् कर्तर्या तदीयानि द्वित्राणि मुखरोमाणि कर्तितवान् । व्याघ्रेण अल्पोऽपि विरोधः न कृतः ।

व्याघ्रस्य मुखरोम्णां प्राप्त्या राजा नितरां सन्तुष्टः । सः मुनेः आश्रमं गत्वा व्याघ्रस्य मुखरोमाणि तस्य पुरतः संस्थापितवान् । मुनिः तु तानि अवकरम् इव पार्श्वे अक्षिपत् ।

"राजन् ! पुत्रस्य परिष्कारः कथं करणीयः इति अवगतं स्यात् खलु भवता ? व्याघ्रस्यैव प्रीतिः सम्पादयितुं यदि शक्या तर्हि मानवस्य प्रीतिः कथं न प्राप्येत ? आदौ भवता पुत्रेण सह सम्भाषणीयं, प्रीतिः दर्शनीया, तदीया मैत्री सम्पादनीया च । कथादयः च मध्ये मध्ये वक्तव्याः । प्रीतिकारणतः सः यदा भवद्वचन-पालकः भविष्यति तदा एव तस्य अध्यापनाय अध्यापकाः नियोक्तव्याः । व्याघ्रस्य मुख-रोम्णां सङ्ग्रहे यत् धैर्यं चातुर्यं च दर्शितं तदेव धैर्यं चातुर्यं च पुत्रविषये दर्शनीयं भवता । तदा भवान् निश्चयेन विजयं प्राप्नुयात्" इति उक्त्वा मुनिः आसनात् उत्थितवान् ।

आश्रमात् प्रत्यागतः राजा आत्मना ज्ञातस्य उपायस्य अनुसर[illegible] आरब्धवान् । पुत्रेण सह सहनया प्रीत्या [illegible] व्य[illegible]हरन् सः अल्पे एव काले पुत्रस्य प्री[illegible] सम्पादितवान् अपि । '[illegible]ता मयि स्निह्यति' इति अवगच्छन् राजकुमारः पितुः आज्ञायाः पालकः जातः । ततः राज्ञा तस्य बोधनाय शिक्षकाः नियुक्ताः । कदाचित् सः मन्त्रिणम् अवदत् - "पुत्रस्य परिष्कार-विषये मया पाठाः पठिताः, अनन्तरम् एव पाठनाय व्यवस्था कृता" इति ।



# अहो धूर्तता !

हेमपुरस्य निवासी माधवः सामान्यपरिवारे जातः । किन्तु तस्य पत्नी नीरजा इच्छति स्म यत् मया वैभवोपेतं जीवनं यापनीयम् इति ।

कदाचित् नीरजायाः बन्धुगृहे प्रवर्तिष्यमाणस्य विवाहस्य निमित्तं निमन्त्रणं प्राप्तं माधवेन । नीरजायाः समीपे सुवर्णाभरणानि न आसन् । प्रतिवेशिनी श्यामला सदा सुवर्णाभरणानि धरति स्म । 'विवाहसमनन्तरम् एव प्रत्यर्पयिष्यामि' इति उक्त्वा श्यामलातः कण्ठहारं प्राप्तवती नीरजा । महता आनन्देन सा आभरणानि धृत्वा बन्धुगृहस्य विवाहं प्रति गतवती । विवाहः समाप्तः । ततः सप्ताहः अतीतः अपि । तथापि तया श्यामलायाः कण्ठहारः न प्रत्यर्पितः । श्यामला अपि आभरणस्य प्रतिदानं न स्मारितवती ।

दशानां दिनानाम् अनन्तरं कदाचित् नीरजा क्रोधपूर्णा सती श्यामलायाः गृहं गत्वा आभरणं सकोपं श्यामलायाः हस्ते निक्षिप्य - ''भवादृशी महावञ्चिका लोके अन्या न स्यात् एव । सुवर्णहारत्वेन निर्दिश्य कृत्रिमः हारः दत्तः भवत्या'' इति अधिक्षिप्तवती ।

एतत् श्रुत्वा श्यामला शान्तेन स्वरेणैव उक्तवती - ''हारः सुवर्णमयः इति मया न उक्तम्, अपि तु भवत्या तथा चिन्तितम् । मत्समीपे स्थितः हारः भवत्या पृष्टः, मया च दत्तः । तदस्तु, हारः कृत्रिमः इति भवत्या कथं ज्ञातम् ?'' इति ।

तदा नीरजा कोपमिश्रितेन एव स्वरेण अवदत् - ''धनस्य आवश्यकता आसीत् इत्यतः मया कुसीदवणिजः समीपं गतम् । तत्र कषेण घर्षणात् ज्ञातं यत् हारः सुवर्णमयः न इति'' इति ।

एतत् श्रुत्वा श्यामला आश्चर्येण स्तब्धा जाता ।



# वार्ताविशेषः

## बलवत्तमः



पञ्जाबीयः मनोजकुमारछोप्रा (३५ वर्षीयः) इदानीं बेङ्गलूरुनगरे निवसति । तस्य लक्ष्यम् अस्ति - मया जगतः बलवत्तमत्वेन ख्यातिः प्राप्तव्या इति । सः पञ्चाङ्गुलाधिकषट्-पादमितोन्नतः अस्ति । २००३ तमे वर्षे भारतस्य अत्यधिकशक्तिमान् जनः इति प्रशस्तिः प्राप्ता तेन । २००४ तमे वर्षे एशियाखण्डस्य शक्तिमत्तमः जनः इति ख्यातिः तेन प्राप्ता । इदानीं सः जागतिकख्यातिं प्राप्तुम् इच्छति । तस्य सामर्थ्यद्योतकानि कानिचन कृत्यानि यथा – दूरवाणीपुस्तकस्य विदारणं, धातुनिर्मितस्य अङ्कफलकस्य विदारणं, धातुफलकस्य निष्पीडनं, मुखवायुना उष्णजलोपेतायाः कूप्याः स्फायीकरणं स्फोटनञ्च इत्यादिकम् । स्वीयस्य प्रदर्शनकार्यक्रमस्य अन्ते सः बालान् स्थूलानां टिप्पणीपुस्तकानां विदारणाय सम्प्रेरयति । 'मम पुरतः एव मुखवायुना वायुगोलान् स्फाययन्तु' इति तान् वदति सः । यदा मुखवायुना वायुगोलानि पूर्यन्ते, तदा तानि पशुपक्ष्यादिरूपेण दृष्टिगोचरतां यान्ति ।

## अधिकजनसङ्ख्यायुक्तानि नगराणि

जगति अधिकजनसङ्ख्यायुक्तानि यानि दश नगराणि सन्ति, तेषु त्रीणि सन्ति भारते एव । गते फेब्रवरी-मासे कृतं विश्वसंस्थीयं सर्वेक्षणम् एतम् अंशं दृढीकरोति । अधिकजनसङ्ख्यायुक्तानि तानि त्रीणि नगराणि – मुम्बयी (१.१३ कोटिः), देहली (१.१३ कोटिः) कोल्कता (१.४३ कोटिः) च । जनसङ्ख्यया प्रथमं स्थानं प्राप्तवत् अस्ति टोकियोनगरम् । अत्र ३.५३ कोटिः जनाः निवसन्ति । द्वितीयं स्थानं मेक्सिकोनगरस्य (१.९२ कोटिः) । न्यूयार्क्नगरस्य तृतीयं स्थानम् (१.८५ कोटिः) । चतुर्थं स्थानं मुम्बयीनगरस्य । एतदपि ज्ञायते यत् ६५० कोटिमितायाः जागतिकजनसङ्ख्यायाः अर्धभागः नगरेष्वेव निवसति इति । २००७ तमे वर्षे एषा ५०० कोटिमिता स्यात् इति ऊह्यते ।



## तमिळुनाडुराज्यीया जानपदकथा

# दुराशाग्रस्तः प्रपाशालास्वामी

एषा कथा मधुरैनगरसम्बन्धिनी । पूर्वं यदा पाण्ड्यराजानां शासनम् आसीत् तदा एतत् नगरं प्रामुख्यं भजते स्म । तत्र आसीत् चामिः नाम सम्मार्जकः कश्चित् । उषसि एव तेन मार्गस्वच्छतार्थं गन्तव्यं भवति स्म । सूर्योदयकाले राजा मन्दिरं गच्छति स्म । ततः पूर्वं मार्गाः स्वच्छाः भवेयुः । राजा अश्वाभ्याम् उह्यमाने रथे उपविश्य गच्छति स्म । उभौ अश्वारोहिणौ भटौ सर्वत्र परीक्षमाणौ राज्ञः रथस्य पुरतः गच्छतः स्म । अतः चामिना परिश्रमेण कार्यं करणीयं भवति स्म ।

अथ कदाचित् स्वकार्यं समाप्य चामिः अङ्गरक्षकौ सम्यक् अपश्यत् । उत्तमस्य अश्वस्य उपरि उपविश्य रक्तवर्णीयं युतकं धृत्वा कौशेयमयम् उष्णीषं धृतवन्तौ आस्तां तौ । तयोः दर्शनात् चामिः अचिन्तयत् - 'यदि मया अपि राज्ञः अङ्गरक्षकत्वं प्राप्येत तर्हि, अहो कियान् आनन्दः भवेत् !' इति ।



कार्यं समाप्य गृहम् आगतः चामिः हस्त-पादादिकं प्रक्षाल्य गृहस्य पुरतः स्थापिते मञ्चे उपाविशत् । केशान् प्रसाधयन्ती स्थिता पत्नी मीनाक्षी पत्युः आगमनं दृष्ट्वा उत्थाय गत्वा क्षीरचषकम् आनीय दत्तवती तस्मै ।

''मया तादृशः सुन्दरः अश्वः इतः पूर्वं न दृष्टः एव । तस्य उपरि उपविश्य क्रियमाणः सञ्चारः अपूर्वम् अनुभवं दद्यात्'' इति अवदत् चामिः ।

''भवान् अङ्गरक्षकस्य अश्वस्य विषये खलु वदति ! तादृशस्य दर्शनम् एव कष्टकरं, किमुत आरोहणम्'' इति अवदत् मीनाक्षी रिक्तं क्षीरचषकं नयन्ती ।

ताम् अनुसृत्य पाकशालां गच्छन् चामिः

अवदत् – "मया कथमपि तादृशः अश्वः सम्पादयिष्यते, तस्य उपरि उपविश्य अवश्यं सञ्चारः करिष्यते च" इति ।

"श्वः भोजनस्य व्यवस्था अपि यस्य गृहे नास्ति तेन अश्वस्य प्राप्तेः स्वप्नः न द्रष्टव्यः । वर्षाकालः आसन्नः । ततः पूर्वम् एतस्य गृहस्य छदिः समीकरणीया । पर्वतदेवः यदि प्रार्थ्येत तर्हि किञ्चित् धनं वा प्राप्येत । ततः गृहस्य समीकरणं शक्येत अपि । अहो, मया इदानीं भूस्वामिनः गृहं गन्तव्यम् । अद्य भूस्वामिनः पौत्रस्य जन्मदिनम् । अतः तत्र कार्याणि बहूनि सन्ति । सायं स्वादु भोजनं, किञ्चित् धनं च प्राप्येत अपि" इति अवदत् मीनाक्षी ।

"अस्तु, भवती भूस्वामिगृहं गच्छतु । रात्रिभोजनाय किमपि प्राप्नोतु । तावता अहं पर्वतदेवं सम्प्रार्थ्य किमपि सम्पाद्य प्रत्यागमिष्यामि" इति अवदत् चामिः ।



पर्वतदेवस्य अनुग्रहः यदि स्यात् तर्हि अप्राप्यं किमपि न स्यात् इति चिन्तयन् चामिः पर्वतस्य दिशि प्रस्थितवान् । किञ्चिद्दूरं गमनस्य अनन्तरं तेन परिवृत्य दृष्टम् । भूस्वामि-गृहं वेगेन गच्छन्ती पत्नी दृष्टा तेन । गृहस्य पुरतः कोणे स्थापिता सम्मार्जनी अपि दृष्टा । 'प्रातःकालात् पूर्वम् आगत्य राज्ञः आगमनात् पूर्वं भवता मार्गाः स्वच्छीकरणीयाः सन्ति' इति स्मारयति स्म सा ।

चामिना वेगेन पर्वतसमीपं गतम् । पर्वतमूलं प्राप्य शिलामयः पर्वतभागः आरूढः तेन । अग्रे गमनेन तेन काचित् गुहा प्राप्ता । तावता नितरां श्रान्तः आसीत् सः । अतः तत्रैव वृक्षस्य अधः उपविश्य पादौ प्रासारयत् सः । उष्णीषम् एव पिण्डीकृत्य उपधानीकृतम् आसीत् तेन । अल्पे एव काले तेन समीचीना निद्रा प्राप्ता ।

"चामे ! उत्तिष्ठ ! भोः उत्तिष्ठ !" इति वचनं श्रुतं तेन । 'मया स्वप्नः दृश्यमानः अस्ति किम्' इति चिन्तयन् सः परितः दृष्टिं प्रसारितवान् । कश्चित् तं कम्पयन् आसीत् । किन्तु समीपे कोऽपि न दृश्यते स्म । सः नेत्रे प्रमार्ज्य अपश्यत् । कोऽपि न दृष्टः तेन ।

पुनरपि ध्वनिः श्रुतः – "भवता पर्वतदेवस्य मेलनाय अत्र आगतम् । अहमस्मि पर्वतदेवः । भवतः शिरसः पार्श्वे एकः शङ्खः अस्ति । यत् आवश्यकं तत् मनसि स्मृत्वा यदि एषः शङ्खः वाद्यते तर्हि अपेक्षितं सर्वं प्राप्यते भवता ।

आहारः, धनं, गृहम्, अश्वः इत्यादिषु यद्यत् इष्यते तत्सर्वं प्राप्यते भवता शङ्खमाहात्म्यात्'' इति ।

चामिः उत्थाय परितः अपश्यत् । गुहायाः पुरतः तेन कश्चन श्वेतः शङ्खः दृष्टः । सः उत्तरीयेण तं शङ्खं बद्ध्वा वेगेन गृहं प्रति प्रस्थितवान् । सूर्यास्तः जातः । सर्वत्र अन्धकारः प्रसृतः । अतः सः मार्गभ्रष्टः जातः । अरण्ये वासः न शक्यते इत्यतः सः कथमपि अग्रे गतः । दूरे काचित् प्रकाशरेखा तेन दृष्टा । प्रपाशालातः स च प्रकाशः निर्गच्छति स्म । अत्रैव रात्रेः यापनं वरम् इति निश्चितवान् सः ।



प्रपाशालायाः स्वामी तस्य वासाय प्रकोष्ठं प्रदर्श्य भोजनस्य आनयनाय निर्गतः । पाकशालास्थः सः शङ्खध्वनिं श्रुतवान् । 'कः शङ्खं वादितवान् स्यात् ?' इति चिन्तयन् आश्चर्यम् अनुभूतवान् सः ।

भोजनम् आनीय चामये यच्छन् सः अपृच्छत् - ''किं भवता शङ्खनादः कोऽपि कृतः ?'' इति ।

''आम् । मया एव शङ्खनादः कृतः'' इति वदन् उत्तरीयेण बद्धं श्वेतं शङ्खं दर्शितवान् चामिः । 'पर्वतदेवस्य अनुग्रहेण एषः प्राप्तः' इति वदन् सः प्रवृत्तं समग्रं श्रावितवान् । ''प्रकोष्ठभाटकरूपेण भोजनाय च दातुं धनम् आवश्यकम् इत्यतः मया शङ्खः वादितः'' इति अवदत् सः ।

एतत् श्रुतवति प्रपाशालास्वामिनि दुराशता उद्बुद्धा । चामिः यदा निद्रावशं गतः तदा विना शब्दं तस्य प्रकोष्ठं प्रविश्य सः तस्य उत्तरीयस्थं शङ्खम् अपनीय तत्स्थाने तत्सदृशम् एव सामान्यं कञ्चित् शङ्खं स्थापितवान् ।

अनन्तरदिने चामिः धनं दातुम् उद्युक्तः । तदा प्रपाशालास्वामी धनस्य स्वीकारं निराकृत्य चामेः हस्तं गृहीत्वा - ''मित्र ! भवादृशः मिलितः यत् तत् मम सौभाग्यम् । अहं भवन्तम् अतिथिं भावयामि । पुनः एतेन मार्गेण यदि आगम्येत तर्हि वासार्थम् अत्रैव आगन्तव्यं भवता'' इति अवदत् कृत्रिमप्रीतिं दर्शयन् ।

तस्मै धन्यवादं समर्प्य चामिः गृहं गतवान् 'मया इतः परं सम्मार्जकवृत्तिः करणीया



शङ्खतः कोऽपि नादः न निर्गतः । "मम हस्ते एषः कार्यं न करोति" इति वदन्ती मीनाक्षी शङ्खं पत्ये दत्तवती । चामिः शङ्खतः नादस्य उत्पादनाय प्रयासम् अकरोत् । किन्तु तस्य सर्वे अपि यत्नाः विफलाः एव ।

"गतरात्रौ इतः नादः उत्पन्नः एव । दश रजतनाणकानि अपि मया प्राप्तानि । प्रपाशालास्वामी धनस्वीकारं निराकृतवान् इत्यतः तानि मत्समीपे एव सन्ति" इति वदता चामिना स्वसमीपे स्थितानि नाणकानि पत्न्यै दर्शितानि ।

"एवं तर्हि अहं चिन्तयामि – प्रपाशालास्वामी भवन्तं वञ्चितवान् स्यात् इति । शङ्खं सम्यक् परिशीलयतु – पर्वतदेवेन दत्तः शङ्खः एषः एव वा इति । प्रपाशालास्वामी भवतः अपूर्वं शङ्खं स्वीकृत्य तत्स्थाने सामान्यं कञ्चित् शङ्खं स्थापितवान् स्यात्" इति अवदत् मीनाक्षी ।

नास्ति । यतः यत् इष्यते तत् प्राप्यते मया' इति चिन्तयन् ।

मीनाक्षी मन्दहासपूर्वकं तं स्वागतीकृत्य अपृच्छत् – "किं भवता पर्वतदेवस्य अनुग्रहः प्राप्तः ?" इति ।

"अथ किम् ? भवत्याः पतिः किं सामान्यः ?" इति वदन् चामिः उत्तरीयेण बद्धं शङ्खं पत्न्याः हस्ते स्थापितवान्, प्रवृत्तं सर्वम् उक्तवान् च ।

"अहो ! महतः सन्तोषस्य विषयः । एषाहम् एतस्य परीक्षां करोमि" इति वदन्ती सा – "अयि शङ्ख ! मह्यं कानिचन सुवर्णनाणकानि ददातु" इति उक्त्वा शङ्खनादं कर्तुं प्रयत्नं कृतवती ।

चामी शङ्खं सम्यक् परिशील्य अवदत् – "भवत्याः सन्देहः युक्तः एव । एषः पर्वतदेवेन दत्तः अपूर्वः शङ्खः न । यतः सः शुभ्रश्वेतवर्णीयः आसीत् । एषः तु मलिनकान्तिः इव दृश्यते" इति ।

"एवं तर्हि सः वञ्चितवान् इति तु निश्चितम् । इदानीं भवान् कार्यार्थं गच्छतु । सायं पुनरपि प्रपाशालासमीपं गत्वा तत्स्वामिनं वदतु यत् कस्यचित् महात्मनः अनुग्रहात् इदानीम् एषः शङ्खः सुवर्णनाणकानि एव ददाति इति । तस्य श्रवणात् सः भ्रान्तः भवेत् एव" इति अवदत् मीनाक्षी ।

चामिः त्वरया मार्गस्वच्छतार्थं गतः । अल्पे एव काले राज्ञः अङ्गरक्षकाः उपस्थिताः ।

राज्ञः पूजासमाप्तौ कश्चन विलम्बः जातः । राज्ञः निर्गमनस्य समनन्तरम् एव चामिः गृहम् आगत्य अल्पकालं विश्रम्य प्रपाशालां प्रति प्रस्थितवान् ।

चामेः दर्शनेन प्रपाशालास्वामी क्षणकालम् आश्चर्येण स्तब्धः । ततः आत्मानं कथमपि निगृह्य मन्दहासं प्रकटयन् सः चामये भोजनं व्यवस्थापितवान् । वार्तालापसमये चामिः अवदत् यत् मत्समीपे स्थितः शङ्खः योगिना अनुगृहीतः सन् इदानीं सुवर्णनाणकानि ददाति इति । प्रपाशालास्वामिना पुनः पुनः काकदृष्ट्या शङ्खः दृश्यमानः अस्ति इत्यंशः तेन लक्षितः एव । तथापि किमपि अजानन् इव सः भोजनं कृतवान् । भोजनानन्तरं सः अवदत् - ''अहं नितरां श्रान्तः अस्मि । अतः किञ्चित् विश्रान्तिं स्वीकर्तुम् इच्छामि'' इति । प्रपाशालास्वामिना दर्शिते प्रकोष्ठे चामिः शयनम् अकरोत् । यद्यपि सः नेत्रे निमील्य सुप्तवान्, तथापि निद्रा तु न कृता तेन । अल्पे एव काले प्रकोष्ठम् आगतः प्रपाशालास्वामी चामेः उत्तरीयेण बद्धं शङ्खं विना शब्दं स्वीकृत्य तत्स्थाने अपरं शङ्खम् अस्थापयत् ।

उषःकालपर्यन्तं चामिः सुखेन निद्रां कृतवान् । ततः उत्थाय गृहं प्रति प्रस्थितवान् सः । एतदवसरे अपि प्रपाशालास्वामिना धनस्वीकरणं निराकृतम् ।

चामिः गृहम् आगतः । ततः तेन शङ्खस्य साहाय्येन वासाय उत्तमं गृहं प्राप्तम् । अश्वः अपि प्राप्तः । अङ्गरक्षकोद्योगः अपि प्राप्तः ।

दुराशाग्रस्तः प्रपाशालास्वामी स्वस्य मूर्खतां स्मरन् नितरां खिन्नः । 'इतः परं सः पुनः अत्र न आगच्छेत्' इति अचिन्तयत् सः ।

किन्तु चामिः तृतीयवारम् अपि प्रपाशालां गतः । किन्तु एतदवसरे सः अश्वम् आरुह्य आगतः । राज्ञः अङ्गरक्षकः एव उपस्थितः इत्यतः प्रपाशालास्वामी दिग्भ्रान्तः ।

''भवता कति सुवर्णनाणकानि प्राप्तानि इति विचारयितुं मया पुनरपि आगतम्'' इति



अवदत् चामिः ।

प्रपाशालास्वामी एतं कण्ठस्वरं श्रुत्वा झटिति एव तम् अभिजानन् - ''अहो, भवान् ! श्रीमन् कृपया क्षन्तव्यः अहम्'' इति वदन् क्षमां याचितवान् ।

चामिः - ''अस्तु, साधयामि तावत्'' इति उक्त्वा अश्वम् आरुह्य ततः निर्गतवान् ।

# वाचकानां कृते कथास्पर्धा

## चिता कथापूर्तिः अर्हति रू. २५०/- पारितोषिकत्वेन

अधस्तनकथा पठ्यताम् -



गोपालस्य बन्धुः कश्चन मानसिकचिकित्सालये चिकित्सां प्राप्नुवन् आसीत् । कदाचित् गोपालः रोगिणः मेलनाय तं चिकित्सालयं गतवान् । चिकित्सालयीयाः अवदन् - 'स्वागतप्रकोष्ठे प्रतीक्षा क्रियताम्' इति । तदनुगुणं गोपालः स्वागतप्रकोष्ठे दीर्घपीठे उपाविशत् । अल्पे एव काले अपरः कश्चन आगत्य तस्मिन् एव दीर्घपीठे उपविष्टवान् । गोपालः तम् अपृच्छत् - ''किं भवान् अपि कस्यचित् रोगिणः मेलनाय अत्र आगतः ?'' इति ।

तदा सः अवदत् - ''चतुर्भ्यः मासेभ्यः पूर्वम् अहम् अत्र आनीतः बन्धुभिः । ते अभिप्रयन्ति यत् मम मनसः स्वास्थ्यं सम्यक् नास्ति इति'' इति ।

''भवान् सम्यक् एव अस्ति इति भाति खलु !'' इति अवदत् गोपालः ।

''आम् । अत्र आगमनस्य अनन्तरम् एव मम स्वास्थ्यं कलुषितं जातम् इति चिन्तयामि अहम्'' इति उक्त्वा सः अपृच्छत् - ''आर्य ! मम कश्चन प्रश्नः । भवान् चर्ममयीं पादरक्षाम् इच्छति उत काष्ठमयीम् ?'' इति ।

''चर्ममयी एव प्रिया मम'' - गोपालः अवदत् ।

''युक्तम् एतत् । सा क्वथिता इष्यते उत मृष्टा ?'' अपृच्छत् रोगी ।

अग्रे किं प्रवृत्तं स्यादिति चिन्तयन्ति भवन्तः ? एतस्याः कथायाः समाप्तिः कथं कर्तुं शक्या ? ***स्वस्य अभिप्रायं १००-१५० शब्दैः लिखित्वा योग्यं शीर्षकम् अपि संसूच्य पिहितपत्रस्य उपरि 'Story contest' इति लिखित्वा अधस्तनेन प्रवेशपत्रेण सह प्रेष्यताम् -***

**अन्तिमः दिनाङ्कः - ३०, सप्टम्बर् - २००५**

नाम -------------------- वयः --------- जन्मदिनाङ्कः -------------

विद्यालयः ---------------------------------- कक्ष्या --------------

गृहसङ्केतः ----------------------------------------------------

------------------------------------------------------------------

-------------------------------Pincode ------------------------

पोषकस्य हस्ताक्षरम् भागग्रहीतुः हस्ताक्षरम्

**CHANDAMAMA INDIA LIMITED**

82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097



# नीतिमान्

बोधिसत्त्वः काशीराजस्य ब्रह्मदत्तस्य पुत्रत्वेन जन्म प्राप्तवान् । ब्रह्मदत्तः तस्य नाम कृतवान् – 'शीलवान्' इति ।

शीलवान् राजोचिताः विद्याः अधीत्य, धर्मशास्त्राणां गहनाध्ययनं च कृत्वा काशी-राज्यस्य राजा जातः । सः प्रजाः पुत्रवत् भावयति स्म । अपराधिषु अपि सः दयाम् एव वहति स्म । तेषां जीवनस्य परिष्कारार्थं बहुधा प्रयतते स्म सः ।

दारिद्र्यवशात्, अज्ञानकारणात् च ये चौर्यं कुर्वन्ति तान् न दण्डयति स्म सः । तान् स्वसमीपम् आहूय प्रीत्या हितम् उपदिश्य धनं च दत्त्वा प्रेषयति स्म ।

एतस्मात् तस्मिन् राज्ये चौर्यप्रवृत्तिः क्षीणा जाता । जनेषु परस्परसहकारभावः अपि विशेषतः प्रवृद्धः ।

कोसलदेशः काशीराज्यस्य प्रतिवेशि-देशः । कोसलस्य मन्त्री काशीराजस्य औदार्यं दौर्बल्यम् अभावयत् । अतः सः अचिन्तयत् यत् विनायासं काशीराज्यं जेतुं शक्यम् अस्माभिः इति ।

अतः सः कदाचित् राजानम् अवदत् – "काशीराजः शीलवान् नितरां दुर्बलः । राज्ञा सर्वदा अपि सैन्यस्य वृद्धिविषये विशेषावधानं दातव्यम् । किन्तु सः काशीराजः तु एतद्विषये सर्वथा अनवधानवान् दृश्यते । लुण्ठाकान् चोरान् चापि दण्डयितुम् अपि न समर्थः सः । एतादृशः भीरुः अल्पेन एव प्रयासेन जेतुं शक्यः अस्माभिः" इति ।

कोसलराजः मन्त्रिणः वचने पूर्णतः विश्वासं न प्राप्तवान् । सः काशीराजस्य सामर्थ्यस्य परीक्षां कर्तुम् इच्छन् सैनिकान् कांश्चन आहूय आदिशत् – "भवन्तः काशीराज्यस्य सीमा-प्रदेशं कश्चित् प्रविश्य तत्रत्यानां ग्रामाणां लुण्ठनं कुर्वन्तु" इति ।

यदा कोसलसैनिकाः काशीराज्यस्य ग्रामं




प्रविष्टवन्तः तदा जनाः सम्भूय तान् सम्मुखीकुर्वन्तः बन्दीकृत्य राज्ञः पुरतः उपस्थापितवन्तः ।

''भवन्तः अस्मद्देशीयाः इव न भान्ति । किमर्थं भवद्भिः लुण्ठनकार्यं कृतम् ?'' इति अपृच्छत् राजा ।

''महाराज ! बुभुक्षाकारणतः अस्माभिः एवं कृतम्'' इति अवदन् कोसलसैनिकाः ।

''यदि बुभुक्षा स्यात् तर्हि अहं याचनीयः आसम्'' इति उक्त्वा राजा कोषागारात् धनम् आनाय्य तेभ्यः दत्तवान् ।

शीलवतः एतं व्यवहारं श्रुत्वा कोसलराजः नितराम् आश्चर्यचकितः । सः पुनरपि काशीराजस्य सामर्थ्यस्य परीक्षणाय अधिकान् सैनिकान् प्रेषितवान् । ते अपि यदा ग्रामाणां लुण्ठने उद्युक्ताः तदा जनाः सम्भूय अल्पेन एव श्रमेण तान् बद्धवन्तः, राज्ञः आस्थानं प्रति नीतवन्तः च ।

राजा तेभ्यः अपि धनं दत्त्वा तान् प्रेषितवान्, दण्डनं तु न कृतवान् । एतत् दृष्ट्वा कोसलराजः अचिन्तयत् यत् काशीराजः दुर्बलः इत्यत्र सन्देहः एव नास्ति, सः लीलया जेतुं शक्यः इति ।

अतः सः महत्या सेनया सह प्रस्थितवान् काशीराज्यस्य वशीकरणाय ।

काशीराज्यस्य सेनाप्रमुखैः मन्त्रिभिः च एषा वार्ता गुप्तचराणां द्वारा ज्ञाता । ते राज्ञः समीपं गत्वा उक्तवन्तः - ''महाराज ! कोसलराजः अस्माकं सामर्थ्यं सर्वथा न जानाति इति भाति । अतः एव गर्वेण सः आक्रमणं कर्तुम् उद्युक्तः दृश्यते । तस्य सैन्यं धूलिसात् करिष्यामः वयम् । कृपया अनुज्ञां ददातु'' इति ।

शीलवान् युद्धे आसक्तः न । अतः सः क्षणकालं विचिन्त्य शान्तस्वरेण अवदत् - ''अनावश्यकतया रक्तपातः न उचितः । काशीराज्यम् इष्यते खलु तेन ? कामं स्वीकरोतु नाम सः एतत् राज्यम् । दुर्गस्य द्वारम् उद्घाटयन्तु भवन्तः'' इति ।

ततः सः कस्यचित् दूतस्य द्वारा वार्ता प्रेषितवान् - ''शत्रुरूपेण आगन्तव्यं नास्ति, मित्ररूपेण आगम्यताम्'' इति ।

कोसलराजः अचिन्तयत् यत् काशीराजः सर्वथा भीरुः इति । अतः सः विकटाट्टहासं कुर्वन् महता उत्साहेन ससैन्यं काशीराज्यं प्रविष्टवान् ।

राजमर्यादायाः उल्लङ्घनं कुर्वन् सः सैन्यसहिततया एव काशीराजस्य सभां प्रविष्ट-

वान् । सभां प्रविश्य सः सैनिकान् आज्ञापितवान् यत् राजा मन्त्रिणः च बन्धव्याः इति ।

''अतिथेः भवतः एतादृशः व्यवहारः न शोभते'' इति शान्ततया अवदत् काशीराजः ।

एतत् श्रुत्वा कोसलराजः उच्चैः हसितवान् । ततः तस्य सैनिकाः मन्त्रिणः राजानं च बद्ध्वा राजचिह्नानि वशीकृतवन्तः । कोसलराजः तान् राज्यात् बहिष्कृतवान् ।

राजा शीलवान् मन्त्रिणः च नगरं परित्यज्य अरण्यं प्रति प्रस्थितवन्तः । रात्रिः यदा आसन्ना तदा ते कस्यचित् वृक्षस्य अधः शयितवन्तः । रात्रौ तैः भोजनादिकं न प्राप्तम् आसीत् ।

मध्यरात्रसमये कोलाहलस्य कारणतः तैः जागरणं प्राप्तम् । केचन लुण्ठाकाः तत्र उपस्थिताः आसन् । लुण्ठाकनायकः शीलवन्तम् अवदत् – ''महाप्रभो ! वयं पूर्वं लुण्ठाकाः आस्म । किन्तु भवतः कृपया वयं तां वृत्तिं परित्यज्य उत्तमजीवनं कुर्वन्तः आस्म । कोसलराजस्य आक्रमणम् अस्माभिः श्रुतम् । अतः एव वयम् अद्य राजभवनं प्रविश्य तत्रत्यां सम्पत्तिं राजचिह्नानि च लुण्ठयित्वा आनीतवन्तः स्मः । भवतां निमित्तं भोजनम् अपि आनीतम् अस्ति अस्माभिः । आदौ राजवेषं धृत्वा भोजनं क्रियताम् । ततः एतस्याः सम्पत्तेः उपयोगः कथं करणीयः इति आदिश्यताम्'' इति ।

शीलवान् राजवेषं धृत्वा मन्त्रिभिः सह उपविश्य भोजनं कृतवान् । ततः सः लुण्ठाकनायकम् अवदत् – ''भवतां समस्या कथं परिहर्तव्या इति तु राज्ञा एव निर्णेतव्यम् । मम तु विश्वासः अस्ति यत् नूतनः राजा भवतां हितं मनसि निधाय एव निर्णयं कुर्यात् इति ।



भवद्भिः सम्पत्तिं लुण्ठयद्भिः अनुचितम् एव कृतम् । अतः भवन्तः राजसमीपं गत्वा सम्पत्तिं समर्प्य तस्य आदेशं पालयन्तु'' इति ।

''सः न राजा, अपि तु लुण्ठाकः । अतः तस्मिन् राजबुद्धिः सर्वथा नास्ति अस्माकम् । अस्माकं राजा तु भवान् एव । अतः वयं तस्य समीपं गन्तुं न इच्छामः । भवान् एव अस्माकं राजा आसीत्, अस्ति, भविष्यति च'' इति अवदन् लुण्ठाकाः ।

प्रातःकाले काशीराजः मन्त्रिभिः लुण्ठाकैः च सह राजसभां गतवान् । तस्य दर्शनात् कोसलेशः निश्चेष्टः जातः ।

शीलवान् प्रवृत्तं सर्वं विस्तरेण निवेद्य अवदत् - ''महाराज ! मम राज्यशासनं यादृशम् आसीत् ततोऽपि उत्कृष्टं शासनं करणीयम् इति उद्देशेन प्रजाहितकाम्यया च भवान् मां सिंहासनात् च्यावितवान् । वराकाः एते लुण्ठाकाः एतत् अजानन्तः रात्रौ राजभवनं प्रविश्य सम्पत्तिं राजचिह्नानि च लुण्ठितवन्तः । भवतः शासनकाले वयं सुखिनः न स्याम इति भीतिः आगता अस्ति तेषां मनसि । अहम् आश्वासनं दत्तवान् अस्मि यत् राजा सहानुभूत्या व्यवहरन् भवतां समस्यां परिहरिष्यति इति । तैः सह सम्पत्तिं स्वीकृत्य अहम् उपस्थितः अस्मि । एतस्य राज्यस्य हिताय मया इतोऽपि अधिकं किम् अन्यत् कर्तुं शक्येत ?'' इति ।

शीलवतः वचनानां श्रवणात् कोसलराजे महत् परिवर्तनं जातम् । सः झटिति सिंहासनात् अवतीर्य काशीराजस्य पादौ गृहीत्वा - ''महात्मन् ! भवान् निश्चयेन श्रेष्ठः अस्ति । लुण्ठाकाः अपि भवति आदरवन्तः सन्ति । भवान् साधारणः मानवः न इत्यत्र एतदेव प्रमाणम् अस्ति । मया अपराधः आचरितः । कृपया क्षन्तव्यः अहम् । अविवेकिनः मन्त्रिणः उपदेशं शृण्वता मया एतत् कृतम् । भवान् कृपया स्वस्य राज्यं प्रतिस्वीकरोतु । भवतः शासनम् अस्ति चेदेव प्रजाः सुखेन शान्त्या च जीवितुम् अर्हन्ति । अहं भवतः मैत्रीमात्रम् इच्छामि, न तु राज्यम् अपि'' इति गद्गदकण्ठः सन् अवदत् ।

शीलवान् पुनरपि काश्याः राजा जातः । सः कोसलराजविषये आदरेण व्यवहरन् तं सत्कृत्य प्रेषितवान् ।





# विष्णुपुराणम्

महामुनिः शौनकः दशावतारेषु अन्यतमस्य बुद्धावतारस्य विषये कथनम् आरब्धवान् -

कलियुगे धर्मः क्षीणतां गतः । अधर्मः निर्बाधतया विराजते स्म । मानवता दुष्टगुणैः पराजिता । क्रूरतायाः साम्राज्यं सर्वत्र अपि ।

पूर्वयुगेषु यदा यदा दुष्टानां प्राबल्यं प्रवृद्धं तदा सर्वदा विष्णुः किमपि रूपं धृत्वा अवतरति स्म । इदानीं पुनः अवतारार्थं समयः आसीत् । समग्रा मानवजातिः परस्परद्वेषेण असूयया च ग्रस्ता आसीत् । परस्परनाशे एव मानवानां रुचिः । यज्ञयागादीनां नाम्ना प्राणिहिंसा निर्बाधं प्रचलति स्म । मदिरामांसादीनां सेवनं कुर्वन्तः जनाः भोगविलासेषु पतिताः । ते स्वकीयां योग्यताम् अपि विस्मृतवन्तः । सर्वत्र मूर्खता दुःखदारिद्र्यादयः च विजृम्भन्ते !

एतत्सर्वं दृष्ट्वा खिन्नः विष्णुः चिन्तितवान् - 'अवतारार्थम् एषः युक्तः समयः । परिपूर्णमानवरूपेण अहं बुद्धनाम्ना भूलोकम् अवतरामि । अज्ञानान्धकारेण कष्टम् अनुभवतां मानवानाम् उद्धारं करिष्यामि' इति ।

नेपालराज्ये कपिलवस्तुनगरे शुद्धोदनः नाम राजा शासनं करोति स्म । तस्य पत्नी मायादेवी । सा कदाचित् स्वप्ने पूर्णिमाचन्द्रः इव प्रकाशमानं कञ्चन श्वेतगजम् आकाशतः अवतीर्य स्वस्य उदरं प्रविशन्तं दृष्टवती ।

राज्ञी स्वप्नवृत्तान्तं ज्योतिषिकान् निवेदितवती । ज्योतिषिकाः उक्तवन्तः - ''एतेन स्वप्नेन ज्ञायते यत् महाराज्ञ्याः गर्भतः एकः महापुरुषः जनिष्यते इति'' इति ।

नवसु मासेषु पूर्णेषु मायादेवी शिबिकाम् आरुह्य मातृगृहं प्रति प्रस्थिता । मार्गे एव सा प्रसववेदनाम् अनुभूय एकस्मिन् उद्याने शिशुं



प्रसूतवती । तद्दिनं वैशाखपूर्णिमा आसीत् ।

समग्रे राज्ये प्रसन्नता व्याप्ता । किन्तु एषा प्रसन्नता दीर्घकालं यावत् न स्थिता । यतः पुत्रजन्मानन्तरम् अल्पे एव काले मायादेवी तीव्रम् अस्वस्था जाता । अल्पे एव काले सा शुद्धोदनं प्रजाः च दुःखसागरे निमज्जयन्ती इहलोकव्यापारं समापितवती ।

मातृविहीनं पुत्रं नेत्रतारकाम् इव परिपालयन् शुद्धोदनः पुत्रस्य नामकरणोत्सवम् आचरितवान् । बालकस्य नाम गौतमसिद्धार्थः इति निश्चितम् । सिद्धार्थः प्रतिपच्चन्द्रः इव सर्वान् आह्लादयन् दिने दिने वर्धते स्म ।

एकदा ज्योतिषिकाः सिद्धार्थस्य जन्मकुण्डलीं परिशील्य उक्तवन्तः - ''महाराज ! एषः राजकुमारः चक्रवर्ती भविष्यति । सर्वे राजानः नागरिकाः च एतं सश्रद्धं मानयिष्यन्ति'' इति ।

एतत् श्रुत्वा महाराजः शुद्धोदनः असीमम् आनन्दं प्राप्तवान् ।

''किन्तु, राजन् ! राजकुमारः एषः संन्यासी अपि भविष्यति'' इति अवदन् ज्योतिषिकाः ।

एतेन शुद्धोदनः पाताले पतितः इव भीतः । तस्य मनसि इदानीं प्रपञ्चः एव शून्यः इव भासते । सः तान् ज्योतिषिकान् पृष्टवान् - ''भवन्तः कदाचित् वदन्ति यत् राजकुमारः चक्रवर्ती भविष्यति इति । पुनः कदाचित् वदन्ति - एषः संन्यासी भविष्यति इति । परस्परं विरुद्धमेतत् कथं सङ्गच्छते ?'' इति ।

तदा ज्योतिषिकाः राजकुमारस्य जन्मकुण्डलीं पुनरपि सुसूक्ष्मं परिशील्य उक्तवन्तः - ''महाप्रभो ! राजकुमारस्य हृदयम् अत्यन्तं कोमलम् । सः रोगिणः, वृद्धान्, मृत्युवशं गतान्, संन्यासिनः च कदाचिदपि न पश्येत् । एतेषां चतुर्णां दर्शनेन एतस्य जीवने भयङ्करः उत्पातः भविष्यति । अतः एतद्विषये सर्वदा जागरूकता भवतु'' इति ।

तद्दिनात् आरभ्य राजकुमारस्य पोषणार्थं विशेषव्यवस्था कृता । सर्वदा मनोरञ्जनकार्यक्रमाः यथा प्रचलेयुः राजकुमारः कदापि चिन्तामग्नः यथा न भवेत्, तथा व्यवस्था कृता । पुत्रस्य पोषणविषये जागरूकः सन् शुद्धोदनः सर्वं स्वयं परिशीलयति स्म ।

एकदा सिद्धार्थः उद्याने आसने उपविष्टः आसीत् । तदा बाणेन ताडितः कश्चन हंसः पीडाम् अनुभवन् तस्य अङ्के पतितः । सिद्धार्थः तस्य हंसस्य शरीरे लग्नं बाणं जागरूकतया निष्कास्य पर्णरसेन व्रणं लेपयित्वा तस्य प्राणान्

रक्षितवान् ।

''एषः हंसः मदीयः । अहम् एव एतं स्वीयेन बाणेन मारितवान्'' इति वदन् देवदत्तः सिद्धार्थस्य समीपम् आगतः । देवदत्तः राजकुलोत्पन्नः सिद्धार्थस्य बन्धुः समवयस्कः च ।

''अहं हंसं रक्षितवान् । अतः हंसस्य उपरि मम एव अधिकारः'' इति उक्तवान् सिद्धार्थः ।

एतद्विषये सिद्धार्थदेवदत्तयोः मध्ये विवादः उत्पन्नः । निर्णयार्थम् उभौ अपि राजसभां प्रविष्टवन्तौ । तत्र धर्मशास्त्रज्ञाः ऐकमत्येन उक्तवन्तः - ''सिद्धार्थः हंसस्य प्राणान् रक्षितवान् । अतः हंसे तस्य एव अधिकारः'' इति ।

एतत्कारणतः सिद्धार्थाय देवदत्तः सर्वदा असूयति स्म । 'कदाचित् वा सिद्धार्थस्य अपमाननं करणीयम्' इति सः चिन्तयति स्म ।

शाक्यवंशीयाः सुक्षत्रियाः । मृगयाविहारः तेषां प्रियतरं कार्यम् । किन्तु शाक्यवंशीयः अपि राजकुमारः सिद्धार्थः मृगयाविहारं न इच्छति । सः सर्वदा तद्विषये तिरस्कारं प्रदर्शयति च । अस्त्रशस्त्रप्रयोगे निपुणतां प्राप्य सः अपारं यशः प्राप्तवान् आसीत् । तथापि प्राणिनां पीडनं मारणं वा तस्मै न रोचते स्म ।

सिद्धार्थः मृगयाविहारार्थं कदापि न गच्छति । मनोरञ्जककार्यक्रमेषु सोत्साहं भागं न गृह्णाति । यं कमपि प्राणिनं दुःखपीडितं दृष्ट्वा सः स्वयं दुःखम् अनुभवति । हिंसायाः दर्शनम् अपि सः न सहते ।

एतत्सर्वं दृष्ट्वा शुद्धोदनः चिन्तितवान् - 'सिद्धार्थस्य धमनिषु रक्तं न, अपि तु करुणरसः एव प्रवहति' इति ।



एवं चिन्तयित्वा सः 'सिद्धार्थः अन्ये राजकुमाराः इव भवतु' इति अभिलषन् बहुविधान् प्रयत्नान् कृतवान् । सः सिद्धार्थस्य मनोरञ्जनार्थं विविधाः व्यवस्थाः उपकल्पितवान् । यथा सिद्धार्थः एकाकी न भवेत्, यथा वा सः गम्भीरचिन्तनार्थम् अवकाशम् एव न प्राप्नुयात्, तथा व्यवस्थां कृतवान् सः ।

यदा राजकुमारः नगरे सञ्चरितुम् इच्छन् बहिः गच्छति तदा रोगिणः, वृद्धाः, शवाः, संन्यासिनः च दृष्टिपथं यथा न आगच्छेयुः तथा व्यवस्थां करोति तदीयः रथवाहकः चेन्नः । सः एतत्सर्वं व्यवस्थाप्य एव राजकुमारं नगरं नयति स्म ।

सिद्धार्थः यदा युवकः जातः तदा सत्यप्रियता, तार्किकदृष्टिः इत्यादयः तस्मिन् उदिताः । स्वर्गात् अवतीर्णः कश्चित् इन्द्रकुमारः



इव सः सुन्दरः आसीत् । किन्तु मनोरञ्जनेषु, भोगविलासादिषु वा तस्य मनः न प्रवर्तते स्म । सर्वदा सः गम्भीरः एव तिष्ठति स्म । न कोपतापाः, न वा हासविनोदाः ।

राजकुमारस्य व्यवहारं दृष्ट्वा शुद्धोदनः चिन्तामग्नः । 'सिद्धार्थः इदानीं विवाहयोग्यः । विवाहः कृतः चेत् एषः सांसारिकविलासेषु अनुरक्तः भवेत्' इति चिन्तयित्वा सः क्षत्रिय-कुलोत्पन्नाः सुन्दरीः सर्वाः राजकन्यकाः राज-भवनं प्रति आमन्त्रितवान् ।

राजकुमारः एतासु कयाचित् आकृष्टः भवतु इति चिन्तयन् शुद्धोदनः अन्तःपुरस्य नृत्यशालायां राजकुमारीणां नृत्यं गानं च आयोजितवान् । युवराजस्य मनः आक्रष्टुम् इच्छन्त्यः ताः स्पर्धाभावेन नृत्यं कृतवत्यः, गीतवत्यः च । सिद्धार्थस्य कटाक्षम् अभि-लषन्तीभिः ताभिः बहुधा विविधाः हाव-भावाः प्रदर्शिताः ।

नृत्यन्तीनां गायन्तीनां च राजकुमारीणां सत्कारार्थं मौक्तिकरत्नसुवर्णमयानि विविधानि आभरणानि पात्रेषु स्थापितानि आसन् ।

सुन्दर्यः राजकुमार्यः कार्यक्रमस्य समाप्तेः अनन्तरम् अपाङ्गदृष्ट्या सिद्धार्थं पश्यन्त्यः पुरस्कारं प्राप्य गच्छन्ति स्म ।

अन्ते सिद्धार्थः आसनात् उत्थाय गन्तुम् उद्युक्तः । तदा स्तम्भस्य पृष्ठभागे स्थिता काचित् रमणी तेन दृष्टा । तस्याः मुखे सौन्दर्यातीतः कश्चन भावः स्फुरति स्म । प्रशान्तवदने अपूर्वा कान्तिः सौजन्यता च स्फुटं प्रतिफलति स्म । सा एकस्य माण्डलिकराजस्य पुत्री । तस्याः नाम यशोधरा इति ।

सिद्धार्थः तया आकृष्टः । सः मन्दं मन्दं तस्याः समीपं गतवान् । तस्यै दातुम् इदानीं तस्य समीपे किमपि न आसीत् । अतः तेन स्वस्य कण्ठहारः एव तस्याः कण्ठे समर्पितः ।

'यशोधरायां सिद्धार्थः अनुरक्तः' इत्येषा वार्ता शुद्धोदनेन ज्ञाता । एतेन सः सन्तुष्टः ।

'सिद्धार्थः यशोधरां परिणेतुम् इच्छति' इति वार्तां दूतद्वारा शुद्धोदनः यशोधरायाः पित्रे प्रेषितवान् । एतत्समये देवदत्तः उक्तवान् - ''यशोधरायाः विवाहार्थं स्वयंवरः व्यव-स्थापनीयः । शौर्यस्य पराक्रमस्य च परीक्षार्थं स्पर्धाः तत्र भवेयुः'' इति । एतदनुसारं यशो-धरायाः पिता स्वयंवरं निश्चित्य सर्वत्र वार्तां प्रेषितवान् ।

स्वयंवरे हिंसारहिताः विविधाः स्पर्धाः आयोजिताः आसन् । असङ्ख्याः युवकाः

तासु स्पर्धासु भागं गृहीतवन्तः । सर्वासु स्पर्धासु सिद्धार्थः एव विजयं प्राप्तवान् ।

सिद्धार्थस्य समबलः प्रतिस्पर्धी देवदत्तः एकः एव । अन्ते अश्वारोहणे बाणप्रयोगे च स्वकीयम् अप्रतिमं कौशलं प्रदर्श्य सिद्धार्थः विजयं प्राप्तवान् । एतदनन्तरं यशोधरा-सिद्धार्थयोः विवाहः महता वैभवेन सम्पन्नः ।

महाराजेन शुद्धोदनेन इदानीं मानसिकी शान्तिः प्राप्ता - 'पुत्रः इदानीं गृहस्थजीवने पादार्पणं कृतवान् । इतः परं सः कौटुम्बिक-जीवनेन आकृष्टः सन् चक्रवर्ती एव भविष्यति, न तु संन्यासी' इति ।

यशोधरा सिद्धार्थानुरूपा पत्नी । सा सुसूक्ष्मं पत्युः मनोभावं परिशीलयन्ती तदनुगुणं व्यव-हरति स्म । 'पतिः मानवतां सर्वश्रेष्ठां मानयति' इति सा अल्पे एव काले ज्ञातवती । एषः गुणः तस्याः अपि इष्टाय एव । तयोः दाम्पत्य-जीवनं ससन्तोषं प्रचलति स्म ।

विवाहानन्तरं सिद्धार्थः अन्तःपुरात् बहिः एव न गतवान् । केषाञ्चित् मासानाम् अनन्तरं तयोः दम्पत्योः एकः पुत्रः जातः । तस्य नाम राहुलः इति निश्चितम् । मातापितृभ्यां पितामहेन च प्रीत्या लालितः सः दिने दिने वर्धते स्म ।

एकस्मिन् दिने सिद्धार्थः नगरं द्रष्टुम् इच्छन् रथम् आरुह्य रथचालनार्थं सारथिं चेन्नम् आदिष्टवान् । चेन्नः इदानीं सङ्कटे पतितः । सः सिद्धार्थस्य सङ्कल्पदृढतां सम्यक् जानाति । अतः सः युवराजादेशं निराकर्तुं न शक्तः ।

रथः कपिलवस्तुनगरस्य राजमार्गे गच्छन् अस्ति । तदा कश्चित् वृद्धत्वकारणतः कम्प-मानः दण्डस्य आधारेण गच्छन् मार्गे आगतः । कोऽपि तं सहानुभूतिदृष्ट्या न पश्यति । वृद्धः



अकस्मात् मार्गे स्खलन् पतति चेत् कोऽपि साहाय्यं न करोति । सर्वे स्वकार्यमात्रं चिन्तयन्तः गच्छन्तः सन्ति ।

रथः किञ्चित् अग्रे गतः । तत्र एकः रोगी मार्गे दृष्टः । भयङ्करेण रोगेण पीडितः सः पतन् उत्तिष्ठन् गच्छति स्म । श्मशानाभिमुखं नीयमानः कश्चन शवः अपि तेन दृष्टः । किञ्चिदनन्तरं सांसारिकजीवनात् विरक्तः कश्चन भिक्षुः अपि तेन दृष्टः । एतस्मात् सिद्धार्थे निगूढतया स्थितः विरक्तिभावः अकस्मात् जागरितः ।

राजकुमारः आत्मना दृष्टस्य दृश्यचतुष्टयस्य विषये बहुविधान् प्रश्नान् कृतवान् । अनिवार्यतया सारथिः सर्वेषां युक्तम् उत्तरं दत्तवान् ।

सिद्धार्थस्य मनसि इदानीं महान् विचारकोलाहलः । सः सारथिम् आदिष्टवान् - 'रथः राजभवनं प्रतिनयतु' इति । सारथिः रथं राजभवनं प्रापितवान् ।

तद्दिने रात्रौ राजकुमारः निद्रां न प्राप्तवान् । बहिः विराजमानां कौमुदीं पश्यन् सः समयं यापितवान् । यशोधरा गाढनिद्रायां निलीना । राहुलः मातरम् आलिङ्ग्य सुप्तः ।

विरक्तिभावनया प्रेरितः सिद्धार्थः राजभवनस्य त्यागं चिन्तितवान् । किन्तु एकत्र पत्नीपुत्राणां विषये व्यामोहः तस्य । अपरत्र वैराग्यम् !! मनः दृढीकृत्य सिद्धार्थः कानिचन पदानि अग्रे गतवान् । पुनः प्रत्यागतवान् । एवम् एव द्वित्रवारं प्रवृत्तम् ।

अन्ते विरक्तिभावः एव प्रबलः जातः । सिद्धार्थः यशोधरायाः पादयोः उपरि एकं कुमुदपुष्पं स्थापयित्वा चरणस्पर्शपूर्वकं तां नमस्कृत्य ततः निर्गतवान् ।

अन्तःपुरतः निर्गतः सः अश्वशालां गतवान् । 'प्रयाणार्थम् अश्वं सज्जीकरोतु' इति चेन्नम् आदिष्टवान् ।

चेन्नः चिन्तितवान् - 'राजकुमारः कौमुदीविहारं कर्तुम् इच्छति' इति ।

राजकुमारः अश्वम् आरुह्य उपविष्टवान् । चेन्नः अश्वस्य खलीनं गृहीत्वा अग्रे गन्तुं प्रवृत्तः । किञ्चित्कालात् पूर्वं जातायाः लघुवृष्टेः कारणतः भूमिः आर्द्रा आसीत् । अतः अश्वस्य खुरपुटध्वनिः केनापि न श्रुतः । अश्वस्य उपरि उपविष्टस्य सिद्धार्थस्य मनः स्थिरम् । मायाजालात् विमुक्तः सः निश्चिन्तः ।





# पिशाचः निर्गतः स्वयम्

वाणी शिववर्मा च निस्सन्तानौ । तयोः व्यवहारः नितराम् उत्तमः आसीत् । अतः ग्रामे सर्वे जनाः तयोः सद्व्यवहारं प्रशंसन्ति स्म ।

कदाचित् रात्रौ महती वृष्टिः जाता । वाणी शिववर्मा च यावत् भोजनाय उपवेष्टुम् उद्युक्तौ तावता द्वारताडनशब्दः श्रुतः । वाणी गत्वा द्वारम् उद्घाटितवती । द्वारे उभौ वृष्ट्या आर्द्रौ दम्पती तया दृष्टौ ।

''नगरं प्रति गच्छन्तौ आवां वृष्ट्या आर्द्रौ जातौ । रात्रिः अपि आगता । किम् अद्य आवाम् अत्र आश्रयं प्राप्तुं शक्नुयाव ?'' इति पृष्टवन्तौ तौ दम्पती ।

''अन्तः आगच्छतां तावत्'' इति उक्त्वा अन्तः निमन्त्र्य वाणी तयोः कृते शुष्कं वस्त्रं दत्त्वा भोजनं परिवेषितवती, शयनाय योग्यां व्यवस्थां कृतवती च ।

तयोः भोजनस्य अनन्तरं अल्पः एव पाकः अवशिष्टः आसीत् । काष्ठादयः वृष्ट्या आर्द्राः आसन् । अतः 'भवान् भोजनं करोतु' इति पतिम् अवदत् वाणी ।

''किम् एकस्य भोजनेन ? यावत् अस्ति तावत् विभज्य खादाव'' इति अवदत् शिववर्मा । ततः तौ सम्भाषमाणौ अल्पाल्पं भुक्त्वा सुखेन शयनं कृतवन्तौ ।

प्रातः एव ताभ्यां रोदनशब्दः कश्चन श्रुतः । द्वारं तु उद्घाटितम् एव दृश्यते स्म । रात्रौ आगता महिला चन्द्रलेखा उच्चैः रोदनं कुर्वती आसीत् । वाणी शिववर्मा च आश्चर्यम् अनुभवन्तौ तस्याः समीपं गत्वा रोदनस्य कारणं पृष्टवन्तौ ।

''किम् अहं वदानि ? मम गार्हस्थ्यजीवनं विनष्टम् । आवाभ्याम् अत्र यदि न आगतं स्यात् तर्हि एव वरम् अभविष्यत् । भवतोः प्रेमपूर्णं व्यवहारं दृष्ट्वा मम पतिः – 'किं भवती कदाचिदपि एवं प्रीतिं प्रदर्शितवती ?' इति माम् अनिन्दत् । मया यावत् सान्त्वनं कृतं चेदपि तत् धिक्कृत्य सः कोपेन निरगच्छत् ।

'पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा'



सः इतःपरं न प्रत्यागमिष्यति'' इति रुदती अवदत् चन्द्रलेखा ।

तां सान्त्वयित्वा शिववर्मा तस्याः पत्युः अन्वेषणाय बहुधा प्रयासं कृतवान् । किन्तु सः कुत्रापि न प्राप्तः एव ।

''सः न प्रत्यागमिष्यति इति अहं जानामि । अहं निर्गतिका जाता । इतःपरम् अहो, कूपे पतनम् एव शरणं मम'' इति रुदती अवदत् चन्द्रलेखा ।

तस्याः दुरवस्थां दृष्ट्वा खिन्नौ दम्पती – ''वत्से ! अलं चिन्तया । पत्युः प्रत्यागमनपर्यन्तं भवती अत्रैव वसतु'' इति उक्तवन्तौ । तस्मात् दिनात् चन्द्रलेखा तस्य गृहस्य सदस्या एव जाता । कोमलस्वभावा इव लक्ष्यते स्म सा । रात्रिपाकं सा एव करोति स्म ।

मासः अतीतः । शिववर्मणः बाल्यमित्रं मुरारिः कदाचित् मित्रस्य दर्शनाय तत् गृहम् आगतः । पूर्वं यदा आगतं तदा चन्द्रलेखा तत्र न आसीत् । शिववर्मणः मुखात् तेन चन्द्रलेखायाः कथा श्रुता ।

तस्मिन् अपि दिने रात्रिपाकं चन्द्रलेखा एव कृतवती । पाकशालायाः पार्श्वे स्थिते प्रकोष्ठे मुरारिः शयनम् अकरोत् ।

रात्रौ दीर्घकालः अतीतः चेदपि तेन निद्रा न प्राप्ता । मध्यरात्रे पृष्ठभागीयस्य वातायन-द्वारस्य मृदुताडनं श्रुत्वा सः नेत्रे उन्मीलितवान् । चन्द्रलेखा लघुदीपं गृहीत्वा मन्दं पाकशालां प्रविशन्ती तेन दृष्टा । तावता पुनः अपि वातायनद्वारताडनशब्दः श्रुतः ।

वातायनद्वारताडनशब्दस्य श्रवणात् चन्द्र-लेखायाः व्यवहारात् च मुरारिः कमपि सन्देहं प्राप्तवान् । सः द्वारस्थे रन्ध्रे दृष्टिं प्रसार्य पाकशालायां प्रचलन्तं व्यवहारं समग्रतया पर्यशीलयत् ।

चन्द्रलेखा स्थालिकायां तण्डुलव्यञ्जनसूप-दध्यादिकं स्थापयित्वा वातायने प्रसारितयोः हस्तयोः अर्पितवती ।

वातायनस्य अपरस्मिन् पार्श्वे स्थितः जनः अवदत् – ''इतोऽपि कति दिनानि मया एवं मध्यरात्रे पिशाचेन इव आगत्य चौर्येण भोजनं करणीयम् ? भवती शीघ्रम् एव धनपेटिकायाः कुञ्चिकां कथञ्चित् वशीकृत्य इतः आगच्छतु तावत्'' इति ।

''कानिचन दिनानि प्रतीक्षन्ताम् । इदानीं तयोः विश्वासः मयि उत्पद्यमानः अस्ति । अचिरात् एव कुञ्चिकां प्राप्स्यामि अहम्'' इति मन्दस्वरेण अवदत् चन्द्रलेखा ।

'अये ! चौर्यशीले ! सद्व्यवहारं दर्शयन्ती मम मित्रं तत्पत्नीं च वञ्चयन्ती भवती पत्या सह मिलित्वा कुतन्त्रं रचयन्ती अस्ति ! अहं भवत्या एतं कपटव्यवहारम् अचिरात् एव स्थगयिष्यामि' इति स्वगतम् एव अवदत् मुरारिः ।

'चन्द्रलेखायाः व्यवहारः ज्ञातः चेत् शिववर्मा वाणी च खिन्नौ भवतः । अतः तौ यथा न जानीयातां तथा कार्यं साधनीयं मया' इति निर्णयम् अकरोत् सः ।

अनन्तरदिने सः शिववर्माणम् उच्चस्वरेण अवदत् – ''गतरात्रौ मया क्षणं यावत् अपि न निद्रितम् । एतस्मिन् गृहे कोऽपि पिशाचः अस्ति इति भाति । मया पूर्वस्यां दिशि रात्रौ शिरः कृतम् आसीत् । प्रातः मम पाददिशि आसीत् पूर्वा दिक् । वातायने स्थापितं जलपात्रं मञ्चस्य अधः प्राप्तं मया । अहं तु धैर्यवान् इत्यतः मम किमपि न जातम् । अन्यः यदि मम स्थाने स्यात् तर्हि तस्य हृदयस्तम्भनम् अभविष्यत्'' इति ।

''एवं तर्हि किं वयं पिशाचोच्चाटकम् आनयाम ?'' इति अपृच्छत् वाणी ।

''अलं भीत्या । पिशाचोच्चाटनम् अहमेव जानामि'' इति अवदत् मुरारिः ।

अनन्तरदिने सः विपणिं गत्वा नूपुरम् आनीय रात्रौ पुनः पुनः अवादयत् । ततः स्वस्य मञ्चे शय्यां प्रसार्य आच्छादकेन आच्छाद्य विना शब्दं बहिः गत्वा पाकशालायाः वातायनं मृदु अताडयत् ।

किञ्चित्कालानन्तरं चन्द्रलेखा अन्नादिसहितां स्थालिकां मुरारेः हस्ते अर्पितवती ।



मुरारिः तां प्राप्य अन्तः आगत्य चन्द्रलेखायाः प्रकोष्ठे संस्थाप्य तस्याः मञ्चं दूरे स्थापयित्वा मौनेन शयनम् अकरोत् ।

चन्द्रलेखा स्थालिकां प्रतिप्राप्तुं वातायनपार्श्वे एव किञ्चित्कालं स्थितवती । किन्तु स्थालिका न प्रतिप्राप्ता । बहिः पतिः अपि न दृष्टः तया । अतः सा पाकशालाद्वारं पिधाय प्रकोष्ठम् आगतवती । प्रकोष्ठे स्थालिकां दृष्ट्वा सा उच्चैः आक्रोशनं कृतवती ।

तस्याः आक्रोशनं श्रुत्वा शिववर्मा वाणी च झटिति जागरणं प्राप्य धावन्तौ आगतौ । मुरारिः अपि किमपि अजानन् इव एव तत्र उपस्थितः ।

चन्दलेखा दिग्भ्रान्ता सती – ''पिशाचः अत्र अस्ति इति तु सत्यम् । गतेषु द्वित्रेषु दिनेषु मया अपि नूपुरनादः बहुधा श्रुतः । गतरात्रौ

मम मञ्चः अन्यत्र गतः अस्ति । पाकशालायाः अन्नयुक्ता स्थालिका इदानीं मम प्रकोष्ठे दृश्यते !'' इति अवदत् ।

तदा मुरारिः – ''अलं भीत्या ! अहं तं पिशाचं निश्चयेन निवारयिष्यामि'' इति तान् उक्त्वा सान्त्वनम् अकरोत् ।

ततः दिनद्वयं यावत् तेन पुनः पुनः नूपुरशब्दः उत्पादितः । अतः भीता चन्द्रलेखा पत्या क्रियमाणं वातायनताडनशब्दं श्रुत्वा अपि प्रकोष्ठात् बहिः न आगता ।

तृतीये दिने रात्रौ मुरारिः गृहात् बहिः एव अतिष्ठत् । चन्द्रलेखापतिः यदा गृहसमीपम् आगतः तदा पथिकः इव गच्छन् मुरारिः स्वगतम् उच्चैः अवदत् – ''किं सा मम भगिनीं वञ्चयेत् ? ताम् अहं निश्चयेन संहरिष्यामि'' इति ।

चन्द्रलेखायाः पतिः एतत् श्रुत्वा सन्देहेन अपृच्छत् – ''किं प्रवृत्तम् ? का वार्ता ?'' इति ।

''महत् अनिष्टम् एव प्रवर्तिष्यते ! एतत् गृहं प्रति आगता तरुणी पत्या परित्यक्ता । मम आवुत्तः वदति यत् अहं तां परिणेष्यामि इति । सा अपि एतस्य परिणयम् अङ्गीकृतवती अस्ति इति श्रूयते'' इति उक्त्वा ततः निर्गत्य अपरेण मार्गेण प्रत्यागत्य मञ्चे सुखेन शयनम् अकरोत् ।

चन्द्रलेखया दिनत्रयतः भोजनं न दत्तम् एव इत्यतः तस्याः पतिः मुरारेः वचने विश्वासं प्राप्नोत् ।

अतः अनन्तरदिने प्रातः सः शिववर्माणं दृष्ट्वा – ''आर्य ! मया मूर्खताम् आचरता पत्नी त्यक्ता आसीत् । इदानीं ताम् अहम् आत्मना सह नेतुम् इच्छामि'' इति अवदत् ।

पिशाचभयात् कम्पमाना चन्द्रलेखा अपि सन्तोषेण एव पत्या सह गन्तुं सज्जा जाता ।

तयोः निर्गमनस्य अनन्तरं वाणी अवदत् – ''तस्याः निर्गमनेन गृहं शून्यम् इव भासते'' इति ।

तदा मुरारिः – ''पिशाचः स्वयं निर्गतः इति भवद्भ्यां सन्तोषः प्राप्तव्यः'' इति वदन् प्रवृत्तं सर्वं विस्तरेण उक्त्वा – 'अज्ञातकुल-गोत्रेभ्यः आश्रयदानावसरे अवश्यं जागरूकता बोढव्या' इति स्मारयित्वा ततः स्वगृहं प्रति निर्गतवान् ।



25

शान्तिपुरीयाः राजविरोधिनः ये अमृतपुरम् आश्रितवन्तः आसन् ते स्वराज्यं प्रति आगमनाय अवसरं प्रतीक्षमाणाः आसन्, तेषां नायकः वसन्तः जयानन्दमुनेः राजकुमारस्य आर्यस्य च सम्पर्कं करोति । जयानन्दः आर्यम् अवशेषाणां मध्ये स्थितं निधिं स्मारयति । 'तस्य स्वामी भवान् एव । भवता एव सः प्राप्तव्यः' इति वदति सः ।

# आर्यः

## अज्ञातराजकुमारस्य रहस्यम्

चित्रम् - गान्धि-अय्यः

वसन्तः आर्यः च निधिस्थले मिलतः । केचन स्वयंसेवकाः अपि तत्र उपस्थिताः भवन्ति ।

वीरसिंहः जब्बरसिंहः च अत्र सम्भाषमाणौ दृष्टौ मया तौ दिवाकाले पुनः अत्र आगमिष्यतः ।

अन्तः किम् अस्ति इति परिशीलयाम तावत् ।

अस्मभ्यं वृषभ-शकटः आवश्यकः ।

अहम् अचिरात् एव आनेष्यामि ।

अत्र अन्या अपि पेटिका दृश्यते ।

ताम् अपि वयं नयाम ।

उभौ स्वयंसेवकौ निधेः रक्षणं कुरुतः । आर्यः वसन्तः च बहिः गत्वा शकटस्य प्रतीक्षां कुरुतः ।

कस्यचित् आगमनशब्दः श्रूयते । वसन्तः आर्यः च भित्तेः पृष्ठतः निलीय तिष्ठतः ।

जब्बरसिंहेन प्रेषितौ सैनिकौ असहायौ ।

अत्र किं वा रक्षणीयम् अस्माभिः ? जीर्णस्य भवनस्य अवशेषाः एव अत्र ।

आवां किञ्चिदनन्तरम् प्रतिगच्छाव ।

सैनिकौ असावधानौ आस्ताम् । आर्यः वसन्तः च हठात् आक्रमणं कुरुतः ।



स्वयंसेवकाः औषधरसं कञ्चित् आघ्रापयन्ति । सस्यरसबिन्दवः मुखे पात्यन्ते अपि ।



वसन्तः रज्जुम् आनीय पृष्ठभागे तयोः हस्तं बध्नाति ।




कश्चन स्वयंसेवकः शकटम् आनयति ।




स्वयंसेवकाः पेटिकाः शकटे आरोपयन्ति ।






उष्णीषैः आवृताभिः पेटिकाभिः युक्तः शकटः वेगेन गच्छति



उषाकिरणेषु उदितेषु आर्यः वसन्तम् आप्रच्छन-वचनानि वदति ।
मित्र ! अहम् अमृतपुरं गत्वा सहकारिभिः मेलिष्यामि । शान्तिपुरं प्रति गमनावसरे भवतः नेतृत्वम् अपेक्ष्यते ।
भवतु वसन्त ! भवान् मम सन्देशं प्रतीक्षताम् ।

अनन्तरदिने वीरसिंहः जब्बरः च अवशेषसमीपम् आगच्छतः । महान् आघातः प्राप्तः ताभ्याम् ।
जब्बरसिंह ! किं भवतः सैनिकाः एवं रक्षणकार्यं कुर्वन्ति ?
महाराज ! तौ तु दक्षौ एव । मूर्च्छाजनकम् औषधं पायितम् इति भाति मम ।

महाराज ! सर्वम् अपि अपहृतं दृश्यते । कस्मिंश्चिदपि प्रकोष्ठे किमपि नास्ति एव !
नितराम् आश्चर्य
एतत् । गतरात्रौ दृष्टं तत् ऐश्वर्यं प्रायः पूर्वतनस्य कस्यचित् राज्ञः आसीत् ।

जब्बरसिंह ! गतरात्रौ आवयोः निर्गमनस्य अनन्तरं केनचित् आगत्य सम्पत्तिः नीता । कः स्यात् सः ?
सैनिकौ जागरयाम । तौ प्रायः वस्तुस्थितिं वक्तुम् अर्हतः ।
महाराज ! आवाम् आश्चर्येण स्तब्धौ स्वः ।



अत्र आगमनस्य अनन्तरं केनचित् दलेन आवां हठात् आक्रान्तौ जातौ ।
एवं वदतः भवतः किं लज्जा न भवति ? कर्तव्यपालने अदक्षः भवान् ।
जब्बरसिंह ! प्रतिगच्छाम तावत् । अत्र समयस्य व्यर्थीकरणेन किम् ?
महाराज ! बाणः कश्चन । सन्देशः अपि अस्ति अत्र ।
एतत् दीयताम्
एषः बाणः कामपि वार्तां ज्ञापयति ।
निधिरूपेण यत्
प्राप्तं तत् तु प्रजानाम् ।
प्रजानां कल्याणाय एव
तत् स्वीकरणीयम् ।
न तु युद्धविस्ताराय ।
- इति आदिशति
राजकुमारः आर्यः
राजकुमारस्य आर्यस्य विषये अधिकं विवरणं ज्ञातुं जब्बरसिंहः तौ सैनिकौ विविधान् प्रश्नान् पृच्छति ।
सः राजकुमारः आर्यः कः स्यात् ?
भवतोः मुखबन्धनं केन कृतम् ?
अनुवर्तते

# चित्तौडीयः विजयस्तम्भः



भारतस्य इतिहासे चित्तौडस्य दुर्गस्य विशेष-महत्त्वम् अस्ति । ७२८तमे क्रिस्ताब्दे प्रसिद्धः रजपूतवीरः बप्परावलः एतत् दुर्गं निर्मापितवान् । रजपूताः शौर्येण, पराक्रमेण, प्रगतिपरैः कार्यैः, संस्कृतिपरत्वेन च ख्याताः आसन् । बप्परावलेन निर्मितम् एतत् नगरं मोगलराजैः ध्वस्तीकृतम् ।

विश्वविख्यातायाः सुन्दर्याः पद्मिन्याः पतिः राजा भीमसिंहः अत्रत्यः एव । कृष्णभक्ति-कारणतः समग्रे देशे ख्यातया मीराबाय्या निर्मितः कृष्णालयः अत्रैव अस्ति । तस्याः पत्या कुम्भराणावर्येण निर्मापितम् एकं मन्दिरम् अपि अत्र अस्ति ।

अत्रत्येषु भवनेषु अतिविशिष्टं भवनम् अस्ति विजयस्तम्भः । मालवराजः (सुल्तानः) मोहम्मदखिलजी चित्तौडस्य वशीकरणाय आगत्य पराजयं प्राप्य प्रतिगतः । तस्यैव विजयस्य स्मरणार्थम् एषः विजयस्तम्भः निर्मितः । १४४० तमे क्रिस्ताब्दे कुम्भराणा एतं निर्मापितवान् । एषः १२२ पादौन्नत्ययुतः अस्ति ।

# पुटोऽयं भवताम् पुटोऽयं भवताम्

## भवदर्थं विज्ञानम्

### मस्तिष्कतरङ्गाः नाम के ?



मस्तिष्कतरङ्गशब्दश्रवणेन वयं चिन्तयामः यत् एते तरङ्गाः बुद्धिमत्तासम्बद्धाः इति । किन्तु वस्तुस्थितिस्तु न तथा । मस्तिष्केण उत्पाद्यमानाः विद्युत्तरङ्गा एव मस्तिष्कतरङ्गशब्देन निर्दिश्यन्ते । मस्तिष्कं सर्वदापि एतादृशान् तरङ्गान् उत्पादयत् एव भवति । एतदर्थं मस्तिष्के अपूर्वं चिन्तनमेव परिस्फुरेत् इति नास्ति ।

हृदयस्पन्दपरीक्षणयन्त्रेण, तत्सादृशेन यन्त्रान्तरेण वा एतेषां तरङ्गाणां गतिः परिमातुं शक्या । उत्पत्तिप्राचुर्यम् अवलम्ब्य तेषु द्वैविध्यं चातुर्विध्यं वा कल्प्यते । जाग्रदवस्थायां शान्तस्थितौ मस्तिष्कम् अल्फातरङ्गान् उत्पादयति । यदा कार्यव्यग्रता भवति तदा बीटातरङ्गाः उत्पद्यन्ते । क्रियाशीलतादशायाम् एते दृश्यन्ते । थीटातरङ्गास्तु बालेष्वेव दृश्यन्ते । प्रौढेषु अपि ते क्वचित् दृश्यन्ते, किन्तु न सामान्यस्थितौ ।

## भवतां परिसरः

### मधुकर्कटी

कदली इव मधुकर्कटी अपि शलाटुदशायां शाकत्वेन उपयुज्यते । किन्तु सा एव यदा पक्वा भवति तदा तु फलायते ।

मधुकर्कटीसस्यं क्रान्तिवलयभूमौ प्रायः सर्वत्र वर्धते । भारते तु सर्वत्र दृश्यते एतत् । मधुकर्कट्यां बहवः औषधीयगुणाः सन्ति । यदा सस्ये छेदः क्रियते तदा एतस्मात् सस्यात् श्वेतः द्रवविशेषः निर्गच्छति । फलदशायाम् एषः द्रवविशेषांशः सान्द्ररूपेण सङ्गृहीतः भवति ।

मधुकर्कटीफले पपेन्नामकः अंशः यथा, तथा 'ए'जीवसत्त्वम् अपि आधिक्येन भवति । अत एव वर्धमानानां बालानां कृते उत्तमः आहारः एषः । पक्वतादशायां मधुकर्कटी जीवसत्त्वस्य आकरः भवति । पक्वायाः मधुकर्कट्याः खादनेन भवन्ति बहवो लाभाः । मधुकर्कटी मलबद्धतां यथा तथा अतिसारमपि निवारयति । एषा क्षुधावर्धिका अपि ।

अल्पाहारस्य अर्धघण्टातः पूर्वं यदि प्रतिदिनं मधुकर्कटी सेव्येत, तर्हि रक्तचापपीडा निगृहीता भवेत् निश्चयेन ।



# पृष्टोऽयं भवताम् पृष्टोऽयं भवताम्

## भवन्तः जानन्ति किम् ?

### अपूर्वः आश्रयः





घोरायां मरुभूमौ तीक्ष्णातपात् रक्षणं प्राप्तुं कः उपायः उत्तमः स्यात् इति चिन्तयन्ति भवन्तः ? प्रायः अनुकूलवातप्रकोष्ठे वासः इति खलु वदेयुः भवन्तः ? किन्तु भारद्वाजपक्षी तु अन्यमेव उपायम् आश्रयति, यञ्च भवन्तः ऊहितुमपि न शक्नुयुः ।

तीक्ष्णातपात् आत्मनः रक्षणाय तेन अनुस्त्रियमाणः मार्गः नितराम् अपूर्वः । मध्याह्नकाले सः इजिप्षियनूगोधिकायाः च्छायाम् आश्रयति । एतत्स्थलं सुखदायकं निरपायञ्च इति सः जानाति । यतः आश्रयदात्री गोधिका भवति शाकाहारा ।

कौतुकं नाम, स्वस्य आश्रयभूतं प्रदेशं प्रति स्वजातीयस्य अन्यस्य पक्षिणः आगमनाय अवकाशं न कल्पयति अयं पक्षी । यद्यपि तत्र द्वित्रैः पक्षिभिः आश्रयः प्राप्तुं शक्यः, तथापि स तु अन्यस्य उपस्थितिं न सहते ।

## अभिवर्ध्यतां ज्ञानशक्तिः

### दक्षिणराज्यानि अधिकृत्य अत्र सन्ति प्रश्नाः

१. कुचिपुडीनृत्यप्रकारस्य मूलम् अस्ति दक्षिणभारतीयं किञ्चन राज्यम् । तस्य राज्यस्य नाम किम् ?



२. दक्षिणाधित्यकासु स्थितासु नदीषु दीर्घतमा का ?



३. कथक्कली कस्य प्राचीननृत्यप्रकारस्य परिष्कृतं रूपम् ?

४. २००२ तमे वर्षे कः दक्षिणभारतीयः कृतिकारः ज्ञानपीठप्रशस्तिं प्राप्तवान् ?



५. दक्षिणभारतीयं किञ्चन क्रीडाङ्गणं (स्टेडियम्) तमाखुरहितत्वेन ख्यातमस्ति । तत् कुत्र अस्ति ?

६. अन्ताराष्ट्रियस्य आध्यात्मिकसङ्घटनस्य प्रमुखः दक्षिणभारतीयः कश्चन सद्यः दिवङ्गतः । सः कः ?

(उत्तराणि ७० तमे पृष्ठे)

# चित्रशीर्षिकास्पर्धा

**अधस्तनं चित्रद्वयं दृष्ट्वा परस्परसम्बन्धिना वाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ?**



NARAYANAMURTHY TATA



NARAYANAMURTHY TATA

समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -

**चन्दमामा (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६००८५**

योग्या शीर्षिका एतन्मासस्य २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू. १००/- पुरस्काररूपेण दास्यते । पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

## अभिनन्दनानि

पुरस्कृता शीर्षिका





'जुलै'मासस्य शीर्षिकाप्रेषिका -

**डा॰ चारुलता कुलकर्णि**

**१७९६, ए, ब्रह्मेश्वरबाग्, वरुणतीर्थ,**

**कोल्हापुर - ४१६०१२(महा॰)**

**सिध्यति कार्यं सततात् यत्नात्**
**हरिताः गुल्माः सततसेचनात्**

## अभिवर्ध्यतां ज्ञानशक्तिः - उत्तराणि

१. आन्ध्रप्रदेशः ।
२. गोदावरी ।
३. रामनाडुम् ।
४. तमिळुलेखकः जयकान्तन् ।
५. कोचीस्थं जवहरलालनेहरु - अन्ताराष्ट्रियं क्रीडाङ्गणम् ।
६. स्वामी रङ्गनाथानन्दः (रामकृष्णमठीयः)

Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai - 26 on behalf of Chandamama India Limited, No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097. Editor : B. Viswanatha Reddi (Viswam)

# तैलगाथा



दासवर्यः श्रेयस्याः पिता । तैलसंस्करणसंस्थायाम् अभियन्तृपदे तिष्ठति सः । कदाचित् सः वीणायाः कक्ष्याम् आगतवान् पेट्रोलियम्-इतिहासस्य बोधनाय ।

"आधुनिकं जीवनं प्रायः आधिक्येन अवलम्बते पेट्रोलियम्-उपयोगम् । प्रतिदिनम् उपयुज्यमानाः दन्त-कूर्चाः, प्रातः प्राप्यमाणस्य क्षीरस्य कोषाः, भवतां लेखनी इत्यादयः सर्वे अपरिष्कृततैलात् एव निर्मीयन्ते इति भवन्तः किं जानन्ति ?"

क्षणकालं यावत् कक्ष्यायां नीरवता । ततः बहवः युगपत् पृष्टवन्तः – "कथम् एतत् आर्य ?" इति ।

"कथम् एतत् इति ? दन्तकूर्चः लेखनी चापि कथं तैलात् उत्पद्येत इति खलु भवतां जिज्ञासा ?" इति अपृच्छत् दासवर्यः ।

"एतानि सर्वाणि वस्तूनि प्लास्टिक्द्रव्येण निर्मितानि । एवं ननु ? प्लास्टिक्द्रव्यस्य निर्माणे पेट्रोलियं प्रमुखं पात्रं वहति" इति विवृतवान् सः ।

"कदा एतस्य उपयोगस्य आरम्भः जातः ?" इति अपृच्छत् वीणा ।

"बहोः कालात् पूर्वम् एव । तन्नाम प्रायः पञ्चसहस्रात् वर्षेभ्यः पूर्वम् एव । इजिप्शियनूजनाः शङ्कुभवनस्य निर्माणे शवसंरक्षणकार्ये च तस्य उपयोगं कृतवन्तः दृश्यन्ते । सुमेरियनीयाः, बेबिलोनियीयाः, अस्सेरियनीयाः इत्यादयः मार्गनिर्माणे, भवनानां भित्तिनिर्माणे च एतस्य उपयोगं कुर्वन्ति स्म । क्रि. पू. २००० तः पूर्वम् एव चीनदेशीयाः तैलं संस्कृत्य दीपज्वालनाय गृहस्य उष्णतासम्पादनाय च उपयुञ्जते स्म ।"

"मया चिन्तितम् आसीत् यत् तैलम् आधुनिकः शोधः इति । बहोः कालात् पूर्वम् एव तस्य उपयोगः आसीत् इति तु आश्चर्याय" इति अवदत् सुनीता ।

"भवत्याः उपयोगाय तस्य सङ्ग्रहः अद्यापि अवशिष्टः अस्ति इत्यपि आश्चर्यस्यैव विषयः" इति अवदत् दासवर्यः ।

